## Shruti-prakashika & Tantra-prakashika

Extra curricular programmes launched by the Principal, Dr. S. Arunasundaram for the betterment of Vedic & Agamic knowledge.

## Events to remember

The Principal receives "Spirit of Mylapore" award

Remarkable event called "Yugala-vakyartham" performed by legendary scholars

Shri. Sanjiv Sanyal's Visit

Music Competition of Saptaha

S.V.E.E.P of Saptaha

Sanskrit Debate as part of Saptaha

Poorna Kumbha Swagatam

ISSN : 2454 - 2547

# JOURNAL OF THE MADRAS SANSKRIT COLLEGE

# रसिकप्रिया

विलासः ९

# RASIKAPRIYA

ISSUE - 9

संपादकः

आचार्यः डा. से. अरुणसुन्दरः

*Chief Editor :*

**Dr. S. Arunasundaram**

Principal i/c, The Madras Sanskrit College

*Published by :*

**THE MADRAS SANSKRIT COLLEGE**

(Affiliated to the University of Madras)

(Aided by the Central Sanskrit University, New Delhi)

84, Thiru-vi-ka Road (Royapettah High Road), Mylapore, Chennai - 600 004.

Phone : 044-2498 0421 E-mail : mds.sanskritcollege@gmail.com

website : www.madrassanskritcollege.edu.in

**2023**

Title of the Book : **RASIKAPRIYA**

ANNUAL JOURNAL OF THE MADRAS SANSKRIT COLLEGE

First Print : April 2023



Copies : 200

Price : **Rs. 200/-**



Publisher : **Dr. S. Arunasundaram** Principal i/c.
The Madras Sanskrit College
84, Thiru-vi-ka Road (Royapettah High Road)
Mylapore, Chennai - 600 004.

Printer : Shri Harish Printers
Mandaveli, Chennai - 600 028

(Printed and Published by the Madras Sanskrit College, Mylapore, Chennai - 600 004 under financial assistance from the Central Sanskrit University , New Delhi, Ministry of Education Govt. of India).

Group photo with students of Sri Skandaguru Vidyalayam, Thirupparankundram appeared in the Tamil Nadu Government Sanskrit Entrance Examination organized by the The Sanskrit College.

Group photo with students of Sri Kamakshi Veda Sivagama Vidhyalayam, Chengalpattu, appeared in the Tamil Nadu Government Sanskrit Entrance Examination organized by the The Sanskrit College.

Coaching materials avail at: https://bit.ly/sanskrit10th

Initiative of live sessions of regular day-college. Link: bit.ly/sanskritlive

## विषयानुक्रमणिका

Website : www.kamakoti.org

☎ : 044-27222115
044-27224305

|| Sri Chandramouleeswaraya Namaha: ||

Sri Sankara Bhaghavadpadacharya Paramparagatha Moolamnaya Sarvajnapeeta

His Holiness Sri Kanchi Kamakoti Peetadhipathi

# JAGADGURU SRI SANKARACHARYA SWAMIGAL

## Srimatam Samsthanam

**No. 1, Salai Street, KANCHEEPURAM - 631 502.**

वेदवेदान्तमार्गषण्मतप्रतिष्ठापकाचार्याणां श्रीमत्परमहंसपरिव्राजकाचार्यवर्याणां

श्रीमच्छङ्करभगवत्पादानाम् अधिष्ठाने श्रीमत्काञ्चीकामकोटिमूलाम्नायसर्वज्ञपीठसिंहासने

अभिषिक्तानां

श्रीमच्चन्द्रशेखरेन्द्रसरस्वतीश्रीपादानाम् अन्तेवासिवर्यैः श्रीमज्जयेन्द्रसरस्वतीश्रीपादैः

तदन्तेवासिवर्यैः श्रीमच्छङ्करविजयेन्द्रसरस्वतीश्रीपादैश्च

मद्रपुरीसंस्कृतकलाशालाध्यक्षाणां श्रीमतां देवीप्रसादशर्ममहोदयानां विषये क्रियते नारायणस्मृतिः । धर्मश्रद्धाविभूषितैः श्रीमद्भिः कृष्णस्वाम्यार्यैः नवाधिकशताद् वर्षेभ्यः प्राक् प्रतिष्ठापितायाम् अस्यां विद्यासंस्थायाम् इयत्सु संवत्सरेषु वेदान्तमीमांसाव्याकरणन्यायादिषु शास्त्रेषु अनुत्तमं प्रशिक्षणं समवाप्तवन्तो नैके पण्डिततल्लजाः शास्त्रपरम्परां वर्धितवन्तो वर्धयन्तश्च सन्ति । सम्प्रदायरीत्या प्रवर्त्यमानं प्रवर्ध्यमानं चैव शास्त्रप्रशिक्षणं साधुत्वं प्राप्नोतितराम् इत्यतः अस्याः सम्प्रदायपरम्परायाः संरक्षणम् अवश्यकरणीयं वर्तते । तदर्थं च नूनम् अत्यन्तोपकारि भवति विद्वद्भिः अध्ययन-अध्यापन-चिन्तन-वाक्यार्थगोष्ठ्यादौ शास्त्रसागरे निमज्ज्य प्रयत्नपूर्वकम् आसादितानां गूढरहस्यरत्नानां ग्रन्थात्मना निबन्धनं प्रकाशनं च भाविकालाय भूतये । तस्माद् अधुना भवन्तः शास्त्रीयनिबन्धसङ्ग्रहात्मिकां रसिकप्रियानाम्नीं वार्षिकीं पत्रिकां प्रकाशयितुम् उद्युक्ता इति श्रुत्वा भृशं मोदामहे । अस्मदाराध्यदेवतायाः महात्रिपुरसुन्दरीसमेतस्य भगवतः चन्द्रमौलीश्वरस्य अनुग्रहेण श्लाघनीयोऽयं प्रयत्नः अविच्छेदेन अनुवर्तताम्, अभिप्रेतं च शास्त्रप्रचाररूपं साफल्यम् अश्नुताद् इत्याशास्महे ।

नारायणस्मृतिः ।

यात्रास्थानम् – काञ्चीपुरम्

जयसंवत्सरकुम्भशुक्लतृतीया

शाङ्करसंवत्सरः - २५२३

॥ श्रीवाग्देव्यै नमः ॥

# सम्पादकीयम्

Dr. S. अरुणसुन्दरम्

प्राचार्यकल्पः, मद्रपुरीसंस्कृतमहाविद्यालयः

मद्रासविद्यालयतः प्रसूता नानाविदुत्तंसकृतीः वहन्ती।

स्वातन्त्र्यपीयूषमहोनिबन्धैः चकास्ति नव्या **रसिकप्रिया**ऽसौ ॥ १ ॥

**शेषाद्रि**विद्वद्वरसंप्रसूता **देवीप्रसादेन** च लालितेयम् ।

**राधादिकृष्णा**भिधधीरपुष्टा सन्ध्यारुणाभा **रसिकप्रिया**ऽसौ ॥ २ ॥

नारायणीयं विषयं प्रकृत्य सदो यदासीत् विबुधैः विमृष्टम् ।

समर्पितं तत्र हि पत्रजातं तदावहन्ती **रसिकप्रिया**ऽसौ ॥ ३ ॥

**श्रीमन्मणिद्राविड**-मुख्य-विद्वद्-गोष्ठ्या सुसम्पादित-चारु-रूपा।

**ई-पत्रिका**-रूपम् इयात् सुशीघ्रम् इति प्रतीक्ष्या **रसिकप्रिया**ऽसौ ॥४॥

सहृद्धृदाह्लादकरी हि कल्पान् शतं समेत्यापि ततो लसन्ती ।

नित्यं युवत्येव मनस्सु विद्वद्-यूनां चकास्ताद् **रसिकप्रिया**ऽसौ ॥५॥

कपालीशकृपां श्रित्वा **रसिकप्रियपत्रिका।**

प्रकाशितेयं नवमी पण्डितानां मुदो वहेत् ॥ ६ ॥

*****

## AZADI KA AMRUT MAHOTSAV

# महाद्रुमस्य बीजम्

**डा.सु. उमापतिः,**
साहित्यविभागाध्यक्षः
मद्रपुरीसंस्कृतमहाविद्यालयः

'जननी जन्मभूमिश्च स्वर्गादपि गरीयसी' इति वचनानुसारं जननीजन्मभूम्योः उभयोरपि समप्राधान्यं , स्वर्गादपि गुरुत्वं चावगम्यते यद्यपि, तथापि छत्रपतिशिवाजीविषये तावत् तदीयजननीवचसा जनन्यपेक्षया जन्मभूमिरेव गरीयसीत्यवगन्तव्यं भवेत्। लोके ये ज्ञानिनः , वीरपुरुषाः , त्यागिनः , महापुरुषाः सन्ति, तच्चरित्रज्ञातारः प्रायः इदं न जानन्ति यत् तादृशज्ञानिनां, वीराणां, महापुरुषाणां दातारः, उत्पादकाः के इति। परं इदन्तु सत्यं भवति यत् बीजं विना सुन्दरं पुष्पम् वा , मधुरं फलं वा न जायत एव। किञ्च 'संस्कारैः संभवत्येषा दुष्टता साधुता भुवि' इति न्यायेन यः कोऽपि पुमान् मातृसंवर्धनेनैव सर्वजनपूज्यो वा निन्द्यो वा भवति । अतः वीरपुरुषाणां, ज्ञानिनां, लोकाय त्यक्तानां चरित्रमपि प्राधान्यमावहत्येव इतिहासे । तादृशपरम्परायामपरा वर्तते जीजाबाय् महाशया।

चतुर्दशशताब्दौ मेवारस्थानादागतः कश्चन राजवंशः नेपाले, महाराष्ट्रे च स्वराज्यं स्थापितवान् इति इतिहासलेखकः डा. कर्नल् महाशयः लिखति। चतुर्दशशताब्दौ सुजनसिंह इत्याख्यो राजा सतारादुर्गं निर्माय तत्रैव वासमकरोत्। एतत्परम्परागताः 'भोसलवंशीयाः' इत्यात्मानं वदन्ति। भोजवंशीया एव भोसलवंशीया इति जाताः स्युः। त एवेदानीं 'होसले' इति कर्णाटके प्रसिद्धा जाता इति चारित्रकाः कथयन्ति। सतारावंशोत्पन्ननृपेषु 'मालोजी' महाराजः सुप्रसिद्धः। अस्यैव देहजः शाहजीराजः आसीत्॥

तस्मिन्नेव काले जाधव् राव् (यादवरावः) प्रसिद्धवीरपुरुष आसीत्, यस्य पुत्री जीजाबाय् आसीत्। यादवरावः मालोजीमहाशयश्च सुहृदौ आस्ताम्। एकदा होलिकादिने मालोजीमहाराजस्य पुत्रः शहाजी एवं यादवरावस्य पुत्री जीजाऽपि परस्परं जलसेचन, वर्णप्रक्षेपणादिक्रीडाभिः क्रीडन्तावास्ताम्। तदा जीजा शहाजीमुखे चूर्णपटलं कारितवती। बालकोऽयं शहाजी स्वपितुः सकाशं गत्वा जीजाविषयकारोपमुक्तवान्। तत्समये मालोजीमहाराजः जीजाम् स्वस्नुषात्वेन कथितवान्। पश्चादुचितकाले जीजा-शाहजीमहाशययोः विवाहमहोत्सवः समभवत्।

एतस्मिन्नेव सन्दर्भे षाजहान् दक्षिणभारतमाक्रान्तवान्। गोल्कोण्डा एवं बीजापुरमपि स्ववशीकृत्य स्वीयं राज्यं स्थापयामास। अस्मिन् राज्यस्थापने जीजापिता जाधव् रावः साहाय्यमाचरितवान् । इदानीं

जीजाबाय् सताराादुर्गस्य अधिपतेः शाहजीमहाराजस्य पत्नी आसीत्। शाहजीमहाराजस्तु गोल्कोण्डाक्रमणाय निजाम्सर्वकारस्य कृते उपकृतवान्। तेन श्वशुरजामात्रोर्मध्ये कलहः जातः। यतः जाधव् रावः षाजहान्द्वारा गोल्कोण्डाराज्यं प्राप्तुं प्रयतते स्म।

तस्मिन् समये सताराराज्यस्य महत्यापद् संभवेदिति चिन्तया शाहजीनृपः गर्भवतीं स्वपत्नीं जीजाबाय् महाशयां स्वमित्रस्य गृहं प्रेषितवान्। तदा भर्तुः मित्रगृहे वसन्तीं स्वपुत्रीं स्वगृहं नेतुमागतवान् जीजापिता जाधव् राव महाशयः। परं पितृगेहं गन्तुं नैच्छत् सा जीजा। 'हे पितः ! राजपुत्रवीरो भूत्वा म्लेच्छराजस्य कृते उपकरोषि। तथैव तव जामातुर्मम भर्तुः विरोधमाचरसि। तस्मात् त्वं मम वैरी जातः। त्वया साकं नाहं गेहमागन्तुमिच्छामि' इत्युक्त्वा पौनःपुन्येन प्रार्थितवन्तमपि स्वपितरं धिक्कृतवती। अहो आश्चर्यम्! हिन्दुजनसमूहाय स्वपितरं स्वजन्मकुलमपि तिरस्कृतवती। ज्येष्ठप्रसूत्यै अपि पितृगृहं नागच्छत्।

सताराादुर्गे एव 10.4.1627 दिनाङ्के ब्रह्मण्यदेवं, हिन्दुधर्मरक्षकं , पतिव्रतानां सहोदरं, देवालयसंरक्षकं, महावीरं पुरुषशिशुमेकमसूत सा भाग्यवती जीजावाय् महाशया, यश्च शिशुः कालान्तरे वीर शिवाजी इति नाम्ना प्रसिद्धो जातः। तदानीं शाहजीनृपस्तु कारागृहदुःखमनुभवन्नासीत्। अतः जीजा स्वपुत्रमतीव क्लेशेन वर्धितवती। अश्वारोहणं गजारोहरणं, शस्त्रप्रयोगः इति सर्वेष्वपि विषयेषु , सर्वास्वपि कलासु प्रावीण्यं संपादयामास। तातोजी, कोण्डदेवः इति प्रसिद्धविद्वद्वरेण्याभ्यां सनातनधर्मम्, इतिहासपुराणादीन्यपि पाठयामास जीजाबाय् महोदया।

एकदा शिवाजीमहाशयः स्वमातरं प्रणम्य 'अम्ब! तुभ्यं किं रोचते' इति अपृच्छत्। तदा जीजाबाय् एवमकथयत् 'पुत्र! त्वं सुवीरो भूत्वा हिन्दुमतप्रतिष्ठां संपाद्य, दुष्टान्यदेशीयानां नाशं कृत्वा, भारतात् तान् निर्मूलं विद्राव्य, हिन्दुसाम्राज्ये पट्टाभिषिक्तो भूत्वा धर्मं परिपालय, एतदेव मे रोचते' इति।

एवं वीरपुत्रप्रसूतिरियं जीजाबाय् महाभागा भारतदेशस्य संरक्षणे अनितरस्थानमावहतीति न वक्तव्यमेतत्। कीदृगिदं वीरशिवाजीमहाराजवर्धनकौशलम् आसीत् जीजाबाय् महाशयायाः! अहो आश्चर्यम्॥

॥इति॥

ISSN: 2454 - 2547

## AZADI KA AMRUT MAHOTSAV

# स्वातन्त्र्यस्य समये महिलानां दीपशिखा डा० मुत्तुलक्ष्मीः

Sharda Narayanan
Assistant Professor,
Dr MGR Janaki College for Women

### १। उपोद्घातः

अधुना विश्वे भारतदेशस्य महिमा वर्धमानः अस्तीति अस्माकं सर्वेषां गौरवास्पदम्। अत्र शतवर्षेभ्यः पूर्वं स्वातन्त्र्यप्राप्तये असंख्याः जनाः योगदानम्, परिश्रमम्, महान्तञ्च त्यागं कृतवन्तः। तेषां पुण्यात्मनां स्मरणमपि पावनं भवतीति महान् सन्तोषः। तेषु जनेषु एका डा० मुत्तुलक्ष्मीः रेड्डी नाम्नी महिला शिक्षाक्षेत्रे समाजसेवाक्षेत्रे च वीराङ्गना आसीत्। तस्याः प्रभावः भारतीयवैज्ञानिकक्षेत्रे, वैद्यक्षेत्रे, शिक्षाक्षेत्रे, महिलानां सांस्कृतिकजीवने एवं भरतनाट्यक्षेत्रे च सम्यक् दृश्यते। सा वैद्याऽपि आसीत् सामाजिकसेवापराऽपि आसीत्। चेन्नैनगरे विश्वविख्यातस्य Cancer Research Institute संस्थानस्य संस्थापनं तया एव आयोजितमासीत्। यद्यपि डा० मुत्तुलक्ष्मीः स्वयं न नृत्यकलानिपुणा आसीत् तथापि तस्याः आङ्ग्लशासनसमये सहकारनियमरचनासु प्रभावात् संस्कृतिविषये महती क्रान्तिः उत्पन्ना यस्य फलं अद्यापि पश्यामः।

गच्छति काले देशे वैज्ञानिकविकासः प्रचलति एव। अस्मिन् प्रबन्धे विशेषतः नाट्यविषये डा० मुत्तुलक्ष्म्याः योगदानं उद्धृत्य लिख्यते।

### २। भारतीयपरम्परायां नारी

भारतीयसंस्कृतौ महिलानां स्थानं उत्तममासीत् , तासां विषये महत् गौरवं सम्मानञ्च अनादिकालादासीदेव। उपनिषत्सु वेदेषु, इतिहासपुराणादिषु च अनेकवीराङ्गनानां विदुषीणाञ्च आख्यानं श्रृणुमः। प्राचीनकालादारभ्य अस्माकं देशे महाराज्यः पण्डिताश्च विश्रुता आसन्निति सुनिश्चितम्। समाजस्य प्रतिष्ठा गृहस्थेषु जनेषु वर्तते, सहधर्मचारिणीरूपेण गृहलक्ष्मीः कार्यं निर्वहतीति वेदेष्वपि श्रुतम्। पराशक्तिः, जगदम्बिकेति भारतवर्षे भगवतोऽपि स्त्रीरूपेण पूजा प्रसिद्धा।

"यत्र नार्यस्तु पूज्यन्ते तत्र देवाः रमन्ते"। इति उक्तिरपि विश्रुता।

**३। भारतीयसंस्कृतिधारायां नाट्यसम्प्रदायः**

मनुष्येषु पशुपक्षिषु च स्वभावतया नृत्यं दृश्यते। यदा वर्षाकाले मेघाः गर्जन्ति, मुदा मयूराः कृषिकाश्च नृत्यन्ति। शिशिरकालात् अनन्तरं वसन्ततौं प्राप्ते, सर्वे हर्षेण गायन्ति नृत्यन्ति च। जीवनस्य कल्याणावसरेषु जनानां हर्षं प्रदर्शयति नृत्यम्। ऋग्वेदसूक्तेषु देवी उषाः सूर्योदयस्य पूर्वं नृत्यन्ती वर्णिता। अन्ये देवाः इन्द्रमरुदादयोऽपि नृत्यनिपुणाः इति वर्णिताः। चतुष्षष्टिकलासु नृत्यं मुख्यतया गणितम्। नृत्यं गीतं वाद्यं इति त्रयाणां समूहमेव सङ्गीतशब्देन लक्ष्यते। इतिहासपुराणेषु काव्येषु च, कलानां प्रमुखत्वं सम्यक् उल्लिखितम्। रामायणे श्रीरामः रावणश्च उभावपि नृत्यनिपुणौ इति श्रूयते।

यदा हनूमान् रामदूतो भूत्वा लङ्कायां अशोकवनं अगच्छत्, तत्र रावणस्य भवने अनेकानि वाद्यानि, बह्वीः नर्तकीः सङ्गीतविदुषश्च अपश्यत् इति सम्यक् वर्ण्यते। महाभारते विराटनगरे यदा पाण्डवाः अज्ञातवासम् अवसन्, तदा अर्जुनः बृहन्नलानाम्नी नर्तनशालायां शिक्षिका अभवत्। तत्र महाराज्ञी, राजकुमार्यः इतराः अन्तःपुरमहिलाश्च तस्य छात्राः अभवन्। मालविकाग्निमित्रनाटकेऽपि वयं एतत् पश्यामः यत् राज्ञः परिवारे प्रायशः सर्वाऽपि स्त्रियः नृत्ये आनन्दं अनुभवन्ति इति। अतः न केवलं गणिकाः, परन्तु सामान्यजनाः कुलस्त्रियश्चापि नृत्यं प्रायुञ्जन् इति वक्तुं शक्नुमः।

नृत्तरत्नावलीग्रन्थे नृत्यस्य अवसराः एवं वर्ण्यन्ते -

**"त्यागोद्वाहमहाभिषेकनगरीवेश्मप्रवेशोदक-**

**क्रीडासु प्रियसङ्गमव्रतमहादानात्मजोत्पत्तिषु।**

**यात्रापर्वपरीक्षणोत्सवजयानन्दप्रतिष्ठोहित-**

**प्राप्तिष्वभ्युदयाय नृत्तमुचितं स्याद्देवपूजादिषु"॥ १/ १८ ॥**

प्राचीनकाले सामान्यजनाः प्रायेण न ग्रन्थान् पठन्ति, साक्षरा एव न भवन्ति। नाटकेषु हरिकथासु, भागवत-रामायणादिपारायणेषु पुराणोद्धृताः कथाः श्रुत्वा एव पापपुण्ये, धर्मञ्च अवगच्छन्ति। प्राचीनकालादारभ्य नटः, नटी, नर्तकी इत्यादिशब्दैः ज्ञायते यत् स्त्रियः पुरुषाश्च सर्वेऽपि रङ्गमञ्चे रूपकेषु दृश्यकाव्येषु नाट्याभिनयं नृत्यञ्च कुर्वन्तीति।

नाट्यशास्त्रेऽपि नृत्तस्य लोकप्रीतिकरत्वं प्रयोगावसराश्च सम्यक् वर्णिताः। प्रथमाध्याये एवं उल्लिखितम्-

**"वेदविद्येतिहासानामाख्यानपरिकल्पनम्।**

**श्रुतिस्मृतिसदाचारपरिशेषार्थकल्पनम्॥ १/ ११९ ॥**

**विनोदजननं नाट्यमेतत् भविष्यति।**

**देवतानामसुराणां राज्ञामथ कुटुम्बिनाम्॥ १/ १२० ॥"**

चतुर्थाध्याये च एवं उल्लिखितम् –

**"प्रायेण सर्वलोकस्य नृत्तमिष्टं स्वभावतः।**

**मङ्गल्यमिति कृत्वा च नृत्तमेतत्प्रकीर्तितम्॥ ४/ २७० ॥**

**विवाहप्रसवावाहप्रमोदाभ्युदयादिषु।**

**विनोदकारणं चेति नृत्तमेतत्प्रवर्तितम्॥ ४/ २७१ ॥"**

**४। रसानुभवः।**

नाट्यात् जनाः मनश्शान्तिं विनोदञ्च प्राप्नुवन्ति इति सर्वे जानन्ति। आधुनिकाः अपि relaxation, De-stress इत्यादिशब्दात् मानसिक-आरोग्यस्य, शारीरिकस्य च आरोग्यस्य कृते अस्य प्राधान्यं ब्रुवन्ति। अस्माकं शास्त्रेषु रसानुभवं ब्रह्मानन्दसहोदरम् अभिनवगुप्ताचार्याः वर्णयन्ति। रसानुभवद्वारा मोक्ष एव प्राप्यते इति तेषां मतं विश्रुतम्। नाट्यशास्त्रे षष्ठाध्याये उल्लिखितम् -

**"न भावहीनोऽस्ति रसो न भावो रसवर्जितः।**

**परस्परकृता सिद्धिस्तयोरभिनये भवेत्॥ ६/ ३६ ॥"**

तैत्तिरीयोपनिषदि श्रूयते –

**"रसो वै सः। रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति॥ तै० उप० २/७/१"**

नाट्यस्य अभिनयविषये स्त्रीणाम् उचितम् आङ्गिकम् अभिनयं, पुरुषाणाञ्च अन्यत् उचितं अभिनयं वर्णयति। करणेषु, अङ्गहारेषु स्थानकेषु च एवमेव नाट्यविदैः उपन्यस्तम्। तत्र ताण्डवकरणानि सरभसं वर्तन्ते पुरुषाणां उचितानि। माहेश्वरसूत्राणि ताण्डवकाले महेश्वरात् प्राप्तानि इति श्रूयते। स्त्रीणां च लास्याभिनयं वर्णितम्। रसविभाजनेऽपि ताण्डवं लास्यञ्च भिन्नरीत्या प्रयोजितम्। लास्यं शृङ्गाररसप्रधानं भवति। राजादीनां विनोदार्थं प्रवर्तितं सङ्गीतप्रधानं उपरूपकमपि स्त्रीभिः प्रस्तुतं प्रसिद्धिं प्राप्नोत्।

**५। अदृष्टफलं नृत्तम्।**

न केवलं लोके मनुष्यानां विनोदार्थं परन्तु देवालयेषु देवताप्रीत्यर्थम् अदृष्टफलात्मकं नृत्तमपि प्रसिद्धमासीत्।

भगवान् शङ्करः निर्गुणोऽपि शरीररूपं नृत्यक्रियायाः आनन्दं अनुभवितुमभजत इत्यपि नृत्तरत्नावलीग्रन्थे कविः वर्णयति! –

**"शम्भो(:)........... भामनोऽपि सदाशिवाद्याकृतिभेदयोगे।**

**यत्कौतुकं कारणमाहुराप्ता नृत्तं न तत् कस्य भवेत्सुखाय॥ १/४ ॥"**

चतुष्षष्टिकलासु नृत्यम् अपि गणितम्। पूजाविधौ षोडशोपचारेषु च सम्मिलितम्। अयं विषयः श्री आदिशङ्करभगवत्पादैः कृते शिवमानसपूजास्तोत्रे सम्यक् उल्लिखितोऽस्ति। अतः देवालयेषु स्त्रीणां

पुरुषाणां च समूहः नर्तनार्थं सङ्गीतवादनार्थञ्च संवर्धितः आसीत्। Every temple had a full-fledged music department, to cater to a large variety of activities and to propagate the arts.

अनेकेषु देवालयेषु नाट्यकोविदाः सङ्गीतकोविदाः ख्यातिं प्राप्तवन्तः। राजभवनेषु महानगरेषु च बहवः नाट्यमुनयः सूत्रधाराश्च स्वस्वनाटकवृन्दं परिपालयन्ति स्म। अतः भारतवर्षे विभिन्नकोणेषु सङ्गीतकला परां काष्ठां प्राप्ता आसीत् प्राचीनकाले एव। लोके देवदासीकुलः सम्मानितः पोषितः आसीत्। ताः महिलाः न केवलं कलानिपुणाः अपि च संस्कृतभाषाम् अपि जानन्ति, शास्त्र-पुराण-दर्शनमपि पठन्ति स्म। तासु महिलासु नृत्यकलानिपुणाः जनानां प्रीतिं, विख्यातिं, महत् धनञ्च अर्जितवत्यः। तासु अनेकाः भगवद्भक्तिपराः दानशीलाश्च सन्त इव जनैः पूजिता अपि अभवन्।

**६। कलाः अस्तं गच्छन्ति।**

गच्छति काले भारतदेशे म्लेच्छानां आक्रमणेन सङ्ग्रामेण च सनातनधर्मस्य यदा ग्लानिरभवत, तदा कलानामपि दुर्दशा जाता। राजकुलेषु पुत्रजन्म-गृहप्रवेश-विवाह-सङ्ग्रामविजयादिमङ्गलावसरेषु पुराणकथासु आधारितानां नाटकानां अवकाशः लुप्तोऽभवत्। राजधानीषु महानगरेषु च नाट्यस्य विरलता भूता। तदा संस्कृतनाटकस्य सङ्गीतस्य च महती हानिः कृता। प्रदेशेषु एव प्राकृतभाषारूपेण लोकभाषारूपेण नाटकानि सामान्यजनानां प्रीत्यै अवशिष्टानि जातानि। तेषु नाटकेषु देशीनृत्यमपि संरक्षितम्। अद्य एताः नृत्यशैल्यः जनपदनृत्यमिति नाम्ना Folk dance and Semi-classical styles इति विख्याताः।

परन्तु राजभवनेषु श्रृङ्गारप्रधाननृत्यं राज्ञां विनोदार्थं सम्यक् प्रयोजितमासीत्। यद्यपि भक्तिपूर्वकनाट्यस्य अपमाननं कृतम्, विनोदार्थं सङ्गीतस्य परिपोषणं कृतमेव। दक्षिणभारते देवालयेषु देवदासीभिः नृत्यकला संरक्षिता। देवालयस्य आश्रये गुरुशिष्यपरम्परातः भरतनाट्यकला वृद्धेभ्यः बालान् प्रति सङ्क्रमिता। अतः परम्परया आगता कला अद्यापि दृश्यते। देवालयस्य बहिः समाजे विरलं सञ्जातं मार्गीनृत्यं देवदासीकुले एव प्राप्यते स्म। अतः विनोदार्थं धनिकाः इतरे जनाश्च देवदासीकुलानि अधिकं आश्रिताः इति समाजे व्यसनविषयोऽभूत्।

त्रि-चतुश्शतवर्षेभ्यः आरभ्य भारते विदेशीयाङ्ग्लानां साम्राज्यात् देशे सर्वत्र दारिद्र्यमेव दृश्यमानमासीत् प्रायेण। आर्थिकक्लेशात् एवं स्थिते जनानां जीवनं अतिक्लिष्टमासीत्। सभ्याः कलाः प्रायेण अस्तङ्गता आसन्।

अस्यां परिस्थित्यां देवदासीकुलस्य दुर्विनीतत्वं निन्दास्पदत्वं प्रसिद्धमभवत्। जनान् पापकर्मणि नयन्तीति अवमानिता अभवन्। क्रिस्तुमतस्य प्रचारात् आङ्ग्लैः देवदासीविषये बहुतरा निन्दा कृता। ता

अपि महिलाः बालिकाः नान्यगतिना क्लेशेन जीवनं यापयन्ति स्म। तस्मिन् कुले जाताः बालिकाः सामान्यसमाजे विवाहं कृत्वा शान्तिभावेन जीवितुं न शक्नुवन्ति। शिक्षां न प्राप्तुं शक्नुवन्ति। यद्यपि पुरा प्रायेण बालाः कस्मिंश्चित् उद्योगे वा कलाशिक्षायां वा ज्ञानवृद्धैः वयोवृद्धैश्च नियुक्ताः भवन्ति तथापि अद्यतनकाले तत् निन्दास्पदं भवति। बाल्यादनन्तरं अष्टादशवर्षे प्राप्ते एव पुरुषाः महिलाश्च स्वस्वजीवनविषये स्वयं निश्चयं कुर्युः इति सभ्यता। स्वस्य च रुच्यनुसारेण सामर्थ्यानुसारेण प्रभवन्तु सर्वे इति। अतः अस्मिन् विषये महिलानां समाजे स्वातन्त्र्यार्थं, विशेषतः देवदासीमहिलानां स्वतन्त्रतया, सम्मानतया, समानतया च जीवनार्थं डा० मुत्तुलक्ष्मीमहोदया बहु परिश्रमं कृतवती।

**७। डा० मुत्तुलक्ष्मीमहोदयायाः जीवनम्।**

डा० मुत्तुलक्ष्म्याः जन्म 1886 वर्षे तमिल्नाडु-प्रदेशे पुदुकोट्टै पट्टने अभवत्। तस्याः पिता श्री० नारायणस्वामी अय्यर् , माता च चन्द्रम्माल् नाम्नी देवदासी। देवदास्याः सह परिणयं कृतवान् इति नारायणस्वामी महोदयः स्वपरिवारेण बहिष्कृतः आसीत्। अतः तस्य अपत्यानि मातुः बन्धुभिः सह अधिकतया समवर्धन्त। मुत्तुलक्ष्म्याः भ्राता रामस्वामी इति आसीत् यस्य पुत्रः गणेशः पश्चात् "जेमिनि गणेशन्' इति चलनचित्रक्षेत्रे प्रख्यातः अभवत्। सुन्दररेड्डीमहोदयेन सह विवाहानन्तरं मुत्तुलक्ष्म्याः नाम रेड्डी इति अभिधानेन पूरितम् अभवत्।

मुत्तुलक्ष्मीः देवदासीजनैः सम्यक् परिचिता आसीत् तेषां जीवनं क्लेशान् च सम्यक् अवगच्छति स्म। तस्मिन् काले बालिकानां शिक्षणं प्रायेण न भवति स्म तथापि दीर्घदर्शिनः पितुः सहकारेण पाठशालायां शिक्षणं प्राप्तवती। अनन्तरं विश्वविद्यालयेऽपि वैद्यक्षेत्रे शिक्षां प्राप्तवती। स्वमेधया विराजमाना सर्वेषु विषयेषु सुवर्णपदकानि प्राप्तवती।

अनन्तरं वैद्यविश्वविद्यालये अध्ययनं कृत्वा 'डाक्टर्' पदवीं अर्जितवती। तस्मिन् समये पुरुषा एव वैद्यशालायां अध्ययनं उद्योगं च कुर्वन्ति स्म। डा० मुत्तुलक्ष्मीः प्रप्रथमा महिला आसीत् या डाक्टर् पदवीं प्राप्य वैद्या आसीत्। भारतस्य स्वातन्त्र्यक्रान्तिसमये जीवन्ती सा महात्मना मोहनदासगान्धिमहोदयेन श्रीमती एनी बेसन्ट् महोदयया च अतीव प्रभाविता आसीत्।

सा स्नातकोत्तरविद्यार्जनार्थं इङ्ग्लैन्ड् देशम् अगच्छत्। पुनरागमने 1926 वर्षे बहुजनैः प्रार्थिता सा भारतस्य आङ्ग्लशासने Madras Legislative Council सभायाः सदस्यत्वं स्वीकृतवती यत्र सा प्रथमा महिला आसीत्। अस्मिन् संस्थाने स्थिता जनानां जीवनविकासार्थं महिलानां समाजपरिवर्तनार्थं च बहु प्रयासं कृतवती। शासनविषये साहाय्यं कर्तुं सा स्ववैद्यविषयक-उद्योगम् अपि त्यक्तवती। जनैः सह सम्यक् विचारं कृत्वा अनेकानि Reports पत्राणि लिखितवती। समाजपरिवर्तनाय क्रान्तिमपि प्रदर्शितवती। समाजे महिलाः स्वातन्त्र्येण जीवन्तु इति सर्वदा यतते स्म।

तस्याः सूचनानुसारेण आङ्ग्लशासनेन Abolition of Devadasi Bill 1930 वर्षे घोषयित्वा 1947 वर्षे स्वीकृतं येन देवालयेषु नृत्यं निषिद्धम् अभवत्। तदा देवदासीकुलस्य शिशवः अनाथाः स्युः इति Avvai Home संस्था संस्थापिता यस्यां ते बालिका-बालकाः निवसन्तः शिक्षां प्राप्तुं प्राभवन्। तदा रुक्मिणीदेवी भरतनाट्यनृत्यं रङ्गमञ्चे प्रस्तूय कलायाः रक्षणं अकारयत्। तया कलाक्षेत्रः इति नाट्यकलाशालाऽपि स्थापिता। एवं भारतीयप्राचीनकलाः विश्वप्रख्याताः अभवन्। अधुना संपूर्णजगति भारतीयाः विदेशीयाश्च महिलाः पुरुषाश्च भरतनाट्यकलायाः अभ्यासं कुर्वन्ति।

15 अगस्त् 1947 स्वातन्त्र्यदिवसे रेड् फोर्ट् इत्यत्र भारतीयध्वजोद्घाटने ध्वजस्य उपरि अनेकेषां वीराणां नामानि उल्लिखितानि आसन् येषु डा० मुत्तुलक्ष्म्याः अपि नाम आसीत्। 1952 वर्षे सा Cancer Institute संस्थानस्य स्थापनम् अकारयत्। 1956 वर्षे सा भारत पद्मभूषण पदव्या अलङ्कृता अभवत्। अधुनापि तस्याः सङ्केतरूपेण, उपहाररूपेण इमे संस्थे – Avvai Home and Cancer Institute च विराजेते। 1968 वर्षे सा दिवङ्गता। आसां शक्तत्वं व्यक्तित्वं च दिव्यमेवासीत्।

इति महाभागां वीराङ्गनां डा० मुत्तुलक्ष्मीः रेड्डी महोदयां सादरम् संस्मृत्य विरम्यते।

जयतु भारती। जयतु भारतम्।

## Bibliography

Dwivedi, Parasanatha (Ed) (2004) Bharata's Natyasastra, Part two Chapters 6 to 11 (4 volumes). Sampoornanand Sanskrit University. Varanasi. (1991)

Pushpendra Kumar (2019) Natyasastra of Bharatamuni (4 volumes) Translation and Notes. New Bharatiya Book Corporation. Delhi.

V. Raghavan. (Ed) Nrttaratnavali of Jayasena. Madras Govt. Oriental Series No. CVIII. University of Madras, Madras.

Pappu Venugopala Rao & Yashoda Thakore. (2013) Nrttaratnavali of Jaya Senapati. Kakatiya Trust, Warangal.

Narayanan, Sharda & Mohan, Sujatha (2016) Gitagovinda of Jayadeva: Study in Sahitya and Natya. Ambika Aksharavali. Chennai.

Viswanathan, Lakshmi (2008) Women of Pride. Roli Books. New Delhi.

Kersenboom, Saskia C. (2011) Nityasumangali. Motilal Banarsidass. Delhi.

https://en.wikipedia.org/wiki/Muthulakshmi_Reddy

ISSN: 2454 - 2547

# श्रीबिल्वमङ्गलमहत्त्वम्

Dr. S. Umapathi

Assnt. Professor

Head, Department of Sahitya

The Madras Sanskrit College, Chennai - 4.

निरवधिककृपापरिपूर्णस्य भगवतो यद्यपि वर्तन्ते अनेकेऽवताराः मत्स्यकूर्मादयः, तथापि श्रीकृष्णावतारः सर्वावतारश्रेष्ठत्वेन गीयते साधुजनैः । 'एको देवो देवकीनन्दनोऽयम्' 'यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम्' इत्यादीन्याद्रियन्ते वाक्यानि कृष्णस्य पूर्णब्रह्मस्वरूपत्वम् । न खल्वियं वागतिशेते यन्नानादेवताभक्तैश्च कृष्णः सेव्यत इति । परमाद्वैतवेदान्तिनोऽपि श्रीशङ्करभगवत्पादाः 'भज गोविन्दं भज गोविन्दम्' 'कृष्णं वन्दे जगद्गुरुम्' इत्यादि स्तोत्रैः कृष्णं भजन्ते। किं बहुना, त्रिमताचार्या अपि न दृश्यन्ते अविरचितकृष्णवर्णनाः। तादृशगुणगणभरितस्य भगवतः कृष्णस्य गीता 'भगवद्गीता' इति, तच्चरित्रवर्णनप्रधानं पुराणं 'भागवतम्' इति च प्रथते लोके। तस्मिंश्च पुराणे नवत्यध्यायमिते दशमस्कन्धे श्रीकृष्णलीला एव, एकादशे तु उपदेशा दृश्यन्ते। तच्च पुराणमुत्तमज्ञानिना श्रीशुकेन परीक्षिते प्रोक्तम्। तदनुसारिणा बिल्वमङ्गलापरनामकेन लीलाशुकेन कृष्णलीलाः 'श्रीकृष्णकर्णामृतम्' इति ग्रन्थरूपेण वर्णिताः।

अस्मिन् कलियुगे सद्गतिप्राप्तये, मोक्षलाभाय वा कृष्णनामकीर्तनमेव वरीयान् मार्ग इति 'कलौ कल्मषचित्तानां पापद्रव्योपजीविनाम्। विधिक्रियाविहीनानां गतिर्गोविन्दकीर्तनम्॥' 'कृते यद्ध्यायतो विष्णुं त्रेतायां यजतो मखैः। द्वापरे परिचर्यायां कलौ तद्धरिकीर्तनात्॥' इत्यादिपौराणिकपद्यैश्च कृष्णनामकीर्तनस्य सद्गतिप्रदातृत्वञ्चावबुध्यत एव।

तादृशभगवतः कृष्णस्य विद्यन्तेऽनेके भक्ताः नानाप्रदेशेषु मीराबाई, तुकाराम, नरसिंहमेता, पुरन्दरदासर्, अन्नमाचार्य, आण्डाल् इत्यादयः। तत्रान्यतमः केरलीयोऽयं भक्तो बिल्वमङ्गलः 'लीलाशुक' नाम्ना प्रथितः। अस्य च चरित्रं कर्णाकर्णिरूपेणैव ज्ञायते, न तु प्रामाणिकत्वेन। तथापि त्रयोदशशतकीयोऽयमिति प्रत्याय्यते चारित्रिकैः। अमुना हि लीलाशुकेन आश्वासत्रयपरिमिते श्रीकृष्णकर्णामृतग्रन्थे सरससमुल्लसितपदसंरचनया भगवल्लीलाः सङ्ग्रथिताः। स्तोत्रग्रन्थेऽमुष्मिन्

भक्तिरसः मूर्धानमारोहति। अयञ्च रसः सर्वेभ्यः श्रेष्ठ इति भक्तिरसायने श्रीमधुसूदनसरस्वतीसंयमीन्द्राः उररीकुर्वन्ति - 'नवरसमिलितं वा केवलं वा पुमर्थे परममिह मुकुन्दे भक्तियोगं वदन्ति' इति। श्रीरूपगोस्वामिनाऽप्येवमुच्यते उज्ज्वलनीलमण्याम् - 'पृथगेव भक्तिरसराट् स विस्तरेणोच्यते मधुरः' इति। तादृशः भक्तिरसोऽत्र वात्सल्यादिनानाभावभरितः आस्वादयोग्यतां भजति। ग्रन्थेऽत्र प्रायः षड्विंशत्यधिकत्रिशतं पद्यानि भवन्ति। तेभ्योऽस्माभिः अनेके विषयाः अधिगन्तव्याः सन्ति। यथा भक्तिप्रभावः, प्रकृतिचित्रणम्, देवतामाहात्म्यम्, दुःखनिवृत्त्युपायः, वैदिकानुष्ठानपद्धतिः, मोक्षः इत्याद्याः। तत्र केचनांशाः विचारयोग्याः क्रियन्तेऽधुना।

**अ) देवतामाहात्म्यम्**

इदञ्च श्रीकृष्णकर्णामृतस्तोत्रम् स्तोत्रकाव्येऽन्तर्भवति यथा श्रीमन्नारायणीयम्। अत्र हि मुक्तकरूपाणि पद्यानीति हेतोः स्तोत्ररूपोऽयं ग्रन्थः यत्र कुत्रापि वा स्वीकृत्य आस्वादनीयो वर्तते। इह राधामाधवावेव नायकौ। तत्र कृष्णमाहात्म्यं सरसरूपेणास्वादयति कविः इत्थम् -

**बृन्दावनद्रुमलतेषु गवां गणेषु वेदावसानसमयेषु च दृश्यते यत्।**
**तद् वेणुवादनपरं शिखिपिञ्छचूडं ब्रह्म स्मरामि कमलेक्षणमभ्रनीलम्॥ २१॥**

वेदावसानभूतोपनिषदर्थरूपन्निर्गुणं ब्रह्म यत्, तदेवेह बृन्दावनभूरूहगोवनाद्रिकुञ्जेष्वविरतमुदीरितवेणु- र्बद्धमयूरपिञ्छोऽम्बुजेक्षणोऽभ्रसदृशघननीलवर्णः सगुणः कृष्णाख्यो विराजत इति परब्रह्मण एव सगुणत्वमीर्यते कृष्णरूपेण।

**आ) वेदान्तप्रभावः**

श्रीभगवद्गीतायां द्वादशाध्यायविषयोऽत्र विषयो वर्तते। प्रस्थानत्रयान्तर्भूतभगवद्गीतायां 'तेषां के योगवित्तमाः' इत्यर्जुनप्रश्नोत्तरदित्सुः श्रीकृष्णः, 'मय्यावेश्य मनो ये मां......... ते मे युक्ततमाः मताः॥' इति त्रिपुटीकरणयुतसगुणोपासकमहत्त्वं सङ्कीर्त्य, 'ये त्वक्षरमनिर्देश्यम्...... ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः॥' इति निर्गुणोपासकमहिमानं कथयति। तत्रापि 'क्लेशोऽधिकतरस्तेषाम्' इति निर्गुणोपासने काठिन्यसद्भावात् सगुणोपासनोपदेष्टा भगवान् 'भगवति मनसः आधानम्, तत्राभ्यासः, तदर्थं कर्माचरणम्, तस्मै फलत्यागः' इति क्रमशः भक्तियोगमुपदिशति पार्थाय। तत्र 'मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि' इत्यनेन भगवद्धर्माणां हरिगुणश्रवणमननादीनामाचरणमुच्यत इति श्रीमधुसूदनसंयमीन्द्राः। तथा चामुमेव विषयम् -

**उपासतामात्मविदः पुराणाः परं पुमांसं निहितं गुहायाम् ।**

**वयं यशोदाशिशुबाललीलाकथासुधासिन्धुषु लीलयामः ॥ ५४ ॥**

इति पद्ये लीलाशुकोऽतीव सुलभतया वदति। अत्र 'पुराणाः आत्मविदः' इत्यनेन अक्षरोपासकाः निर्दिश्यन्ते। 'तस्मिन् यदन्तः तदुपासितव्यम्' इति श्रुत्युक्तं विषयं 'गुहायां निहितम्' इति, 'यः परः स महेश्वरः' इत्युक्तं 'परं पुमांसम्' इति चोक्त्वा, उपासताम् = जानन्त्विति निर्गुणोपासनशक्तानामधिकतरक्लेशसहिष्णूनां पन्थानङ्कदित्वा श्रवणमननादिभगवद्धर्मरतसगुणोपासकानां मार्गः कथ्यते, 'यशोदाशिशुबाललीलाकथासुधासिन्धुषु' इति। यशोदाशिशुः कृष्णः, तस्य बाललीलारूपाः याः कथाः नवनीतचौर्याद्याः, तास्वेव कथासुधासु लीलयाम इति आत्मनोऽपि सगुणोपासनभक्तियोगेऽधिकारित्वमाकाङ्क्षते कविः।

**इ) कवेर्भक्तिः**

प्रसिद्धनवविधरसेषु मधुरो रसः श्रृङ्गारः। तत्रापि विप्रलम्भश्रृङ्गारः संयोगादतिशेते इत्यालङ्कारिकाः। एवमेव भक्तिरसेऽपि भगवद्विरहतापस्तावद्भगवद्भक्तिवर्धक एव। उक्तञ्च भागवते भगवता कृष्णेन गोपीः प्रति -

**श्रवणाद्दर्शनात् ध्यानान्मयि भावोऽनुकीर्तनात् ।**

**न तथा सन्निकर्षेण प्रतियात ततो गृहान् ॥ (१०.२९.२७)** इति।

एवमेव विरहभक्तिमनुभवति कविर्लीलाशुकः बहुत्र। प्रायशः कृष्णस्य बाल-कैशोररूपे एव दत्तमनाः कविः तद्रूपन्द्रष्टुमाकाङ्क्षते यथा 'हा हा कदा नु भवितासि पदं दृशोर्मे' 'हरे त्वदालोकनमन्तरेण...... हा हन्त हा हन्त कथं नयामि' 'वीक्षिष्ये तव वदनाम्बुजं कदा नु ' ' मृगयति नयनं मे मुग्धवेषं मुरारेः ' इत्यादिना।

अतश्च ईदृशी भक्तिर्विधेया भगवतीति प्रदर्शयति कविः, यतो हि ' भक्त्या तुतोष भगवान् गजयूथपाय ' इति खलु पुराणवचनम्।

**ई) मोक्षः**

'सकलदुःखध्वंस एव मोक्षः ', 'अज्ञाननाश एव मोक्षः ' इत्यादिविकल्पा भवन्ति मोक्षविषये। परन्तु भगवद्भक्ताः भक्तिमेव याचन्ते, न तु मुक्तिम् ' भक्तिर्मुक्तेर्गरीयसी ' 'मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगम् ' इत्यादि वाक्यैः मुक्तेर्गरीयस्त्वमवबुध्यते। अत एव लीलाशुकः मुक्तेर्गरिमाणमेवं वदति -

**भक्तिस्त्वयि स्थिरतरा भगवान् यदि स्यात्**

**दैवे च नः फलितदिव्यकिशोरवेषे ।**

**मुक्तिः स्वयं मुकुलिताञ्जलि सेवतेऽस्मान्**

**धर्मार्थकामगतयः समयप्रतीक्षाः ॥ १.१०७ इति॥**

यदि हरौ दृढा भक्तिस्तर्हि मोक्षलक्ष्मीः स्वयं बद्धाञ्जलिस्तिष्ठति, किमुत धर्मार्थकामपुरुषार्थविषये। तथा च भक्तिमता जनेन मोक्षविषये चिन्ता न कार्येति सूच्यते। एवमेव कृष्णाश्रयणेन मोक्षस्तु भवतीति विषमालङ्कारोदाहरणभूते पद्ये -

**अयं क्षीराम्भोधेः पतिरिति गवां पालक इति**

**श्रितोऽस्माभिः क्षीरोपनयनधिया गोपतनयः ।**

**अनेन प्रत्यूहो व्यरचि सततं येन जननी-**

**स्तनादप्यस्माकं सकृदपि पयो दुर्लभमभूत् ॥** ३.९५ इति।

क्षीरसमुद्रस्य स्वामी, गोपालक इति हेतोरधिकं दुग्धं लभ्येत इति इष्टार्थ समुद्यमे, तन्न लब्धम्, अपि च मातृस्तनक्षीरमप्यलभ्यत्वेन कृतमिति इष्टार्थानवाप्तिः, अनिष्टस्याप्तिरिति सरसं वदति वेदान्तविषयम्। अत्र विष्णुसहस्रनामस्तोत्रे 'जन्ममृत्युजरातिगः' इति यदुच्यते तदेवात्र सालङ्कारं प्रोक्तं भवति। कृष्णश्रितः भक्तः जननीजठरशयनं न प्राप्नोति, तेन च स्तन्यं न लभ्यते, मोक्ष एव इति भावः। तथा च भगवद्भक्त्या, मुमुक्षूणां मोक्षः निश्चित एव। परं तदपेक्षया भक्तिर्गरीयसीति कवेरभिप्रायः।

**उ) काव्यविषयाः**

ग्रन्थेऽस्मिन् काव्यसम्बद्धाः अनेके अलङ्कार-ध्वनि-रसादयः वर्तन्ते। प्रायशः कविना कृष्णकथाः मुक्तकरीत्या आशीःप्रदानरूपेण चोच्यन्ते ' धूधूकृतं पातु नः ' ' कृष्णस्य पुष्णातु नः ' ' पायान्नस्स्वशिखां स्पृशन् प्रमुदितः क्षीरेऽर्धपीते हरिः ' ' धू धू वत्सक जीव जीव चिरमित्युक्तोऽवतान्नो हरिः ' इत्यादि। समग्रेऽपि ग्रन्थे वृन्दावनकथा एव दरीदृश्यन्ते, क्वचित् मथुराकथाः, क्वचिच्च द्वारकायाः। तत्रापि शब्दालङ्काराः वृत्यनुप्रासयमकादयः बहुत्र भवन्ति। अर्थालङ्काराश्च उपमारूपकोत्प्रेक्षाव्याजस्तुतिविरोधाभासविषमश्लेषादयो दृश्यन्तेऽनेके। तत्र अर्थश्लेषमूलया वक्रोक्त्यलङ्कारः कुपितगोपीप्रतिवचनसमये -

अङ्गुल्या कः कवाटं प्रहरति कुटिले माधवः किं वसन्तो

नो चक्री किं कुलालो न हि धरणिधरः किं द्विजिह्वः फणीन्द्रः।

नाहं घोराहिमर्दी किमसि खगपतिर्नो हरिः किं कपीन्द्रः

इत्येवं गोपकन्याप्रतिवचनजितः पातु वश्चक्रपाणिः॥ ३.१०५॥

इत्थं लीलाशुकस्य कृष्णकर्णामृतमिदं कृष्णभक्तकर्णामृतन्तु भवत्येव, अपि च कृष्णस्यापि। उक्तञ्च कविनाऽन्ते –

'या प्रीतिर्विदुरार्पिते मुररिपो कुन्त्यर्पिते यादृशी

या गोवर्धनमूर्ध्नि या च पृथुके स्तन्ये यशोदार्पिते ।

भारद्वाजसमर्पिते शबरिकादत्तेऽधरे योषितां

या प्रीतिर्मुनिपत्निभक्तिरचितेऽप्यत्रापि तां तां कुरु॥' इति शम् ॥

******

<u>उपयुक्तग्रन्थसूची</u>

श्रीकृष्णकर्णामृतम् -LIFCO publishers pvt. ltd., chennai, 2016

उज्ज्वलनीलमणिः - Kavyamala series 95,Ed.I, Nirnaya sagar, Mumbai, 1932

भक्तिरसायनम् - Motilal Banarasidass, Delhi, 1998

भगवद्गीता - Geetha press, Gorakpur, 1998

कुवलयानन्दः - Chowkhamba Vidyabhavan, Varanasi, 2005

श्रीमद्भागवतम् - Motilal Banarasidass, Delhi, 1983

# श्रीमन्नारायणीये वृत्तविन्यासः तद्विमर्शश्च

**Dr. THIAGARAJAN S**
Asst. Prof. Department of Oriental Studies and Research,
SASTRA Deemed University,
Thanjavur, Tamilnadu - 613401.

**उपोद्घातः**

श्रीमन्नारायणीयाख्यं स्तोत्ररत्नमिदं केरलकविना पण्डितेन नारायणभट्टेन लिखितमिति तु सर्वजनविदितमेव। अस्य स्तोत्रस्य रचनाकारणमपि सर्वविदितमेव। नाधिकम् अपेक्षते अत्र किञ्चिद्वक्तुम्। श्रीमद्भागवते द्वादशस्कन्धेषु भगवतः यानि चरित्राणि प्रोक्तानि, तत्संबद्धाः याश्च कथाः प्रोक्ताः तत्सर्वमपि अत्र श्रीमन्नारायणीये कविना शते दशकेषु उपसहस्रेषु (१०३६) पद्येषु संक्षेपेण प्रोक्तं वर्तते। स्तोत्रकाव्यवाङ्मये यावद्वैशिष्ट्यं भजते तावद्वैशिष्ट्यं सामान्यकाव्यवाङ्मयेऽपि वर्तते श्रीमन्नारायणीयस्य अस्य। भक्तिरसः निरर्गलतया प्रवहति अस्यां कृतौ इति तु सर्वानुभूतमेव। स्तोत्रकाव्यदृष्टिम् उल्लङ्घ्य सामान्यकाव्यवाङ्मयदृष्टिरपि अत्र बहुभिः विद्वद्वरेण्यैः बहुधा कृता वर्तते। तादृशमेव एकं पर्यालोचनम् अस्मिन् प्रबन्धे मया क्रियते।

पद्यमयमिदं काव्यम् इत्यस्मात् कारणात् वृत्तानां पर्यालोचनं विहितं मया। वृत्तानां पर्यालोचनमिति कथनेन न केवलं किं दशकं कस्मिन् वृत्ते रचितम् इति विवरणं, परन्तु तद्वृत्तविन्यासे कीदृशं वैशिष्ट्यं वरीवर्त्ति इत्यपि प्रतिपादयितुं कश्चन यत्नः विहितः। यद्यपि स्तोत्ररत्नस्य काव्यविमर्शः कदाचिन्न कर्तव्यः, नापेक्षितो वा इति केषाञ्चन विदुषाम् अभिप्रायः, तथाऽपि यच्च स्तोत्ररत्नं स्तोत्रपदम् अतिरिच्य काव्यवाङ्मयेऽपि महद्वैशिष्ट्यं भजते, तत्काव्यं तत्काव्यकर्ता च संस्कृतवाङ्मये नितरां प्रमुखं स्थानं वहति इत्यस्मादेव कारणात् क्वचिद् एतादृशः विमर्शः अपेक्षितः कर्तव्यश्च भवति। एतदर्थम् अस्य नारायणभट्टकवेः पूर्ववर्तिनः आचार्यस्य क्षेमेन्द्रस्य (एकादशशताब्दीयः) **सुवृत्ततिलकम्** इत्याख्यः ग्रन्थः मया आदृतः। आचार्यः क्षेमेन्द्रः स्वीये सुवृत्ततिलके द्वितीये विन्यासे केषाञ्चन वृत्तानां गुणदोषविचारम् अकरोत्। तानंशान् स्वीकृत्य अस्मिन् नारायणीये कविना कथं ते च गुणाः उपात्ताः, दोषाश्च परित्यक्ताः इति यावद् बुध्या अवगतं तावद् विचार्यते। विस्तरभयात्केवलं वृत्तत्रयं स्वीकृत्य लघुविमर्शः क्रियते।

**विषयविस्तरः - तोटकम्**

तोटकवृत्तमिदं जगत्यधिकारे वर्तते। अस्य लक्षणं छन्दःसूत्रे षष्ठे अध्याये **तोटकं सः**[1] इत्यनेन सूत्रेण उक्तं वर्तते। अर्थस्तु - द्वादशाक्षरपादे जगत्यधिकारे यावद्भिः सगणैः पादपूर्त्तिः जायेत, तद्वृत्तं

[1] छन्दःसूत्रम् (छ.सू.) 6.32

तोटकम् इति कथ्यते इति। इदमेव छन्दोमञ्जर्याम् - **वद तोटमब्धिसकारयुतम्**[1] इति कथितमस्ति। वृत्तरत्नाकरे च केदारभट्टेन - **इह तोटकमम्बुधिसैः प्रथितम्**[2] इति। अब्धयः चत्वारः, तथा च चतुर्भिः सगणैः युतं वृत्तं तोटकम् इति स्पष्टं ज्ञायते। सगणस्य लक्षणं तु - वर्णत्रयघटके गणे अन्तिमाक्षरं यदि गुरु भवति तर्हि स गणः सगणः। लघु-लघु-गुरु इति ज्ञेयम्।

श्रीमन्नारायणीये पञ्चपञ्चाशद्दशके कालियमर्दनवर्णने तोटकवृत्तं प्रयुक्तं कविना। यथा -

**अथ वारिणि घोरतरं फणिनं प्रतिवारयितुं कृतधीर्भगवन्।**
**द्रुतमारिथ तीरगनीपतरुं विषमारुतशोषितपर्णचयम्॥**[3] इत्यारभ्य
**जहृषुः पशुपास्तुतुषुर्मुनयो ववृषुः कुसुमानि सुरेन्द्रगणाः।**
**त्वयि नृत्यति मारुतगेहपते परिपाहि स मां त्वमदान्तगदात्॥**[4]

इत्यन्तम् एतद् दशकं तोटकवृत्ते विरचितं दृश्यते।

अत्र किञ्चित् स्वारस्यं वर्तते। क्षेमेन्द्राचार्यैः कृते सुवृत्ततिलके द्वितीये विन्यासे वृत्तानां गुणदोषप्रदर्शनं कृतं दृश्यते। तदनुरोधेन अस्य तोटकवृत्तस्य विषये इत्थं कथितं वर्तते -

**द्रुतताललयैरेव व्यक्तं रूक्षाक्षरैः पदैः।**
**प्रनर्तयति यच्चित्तं तत्तोटकमभीप्सितम्॥**[5]

यस्मिन् वृत्ते रूक्षाक्षरैः (परुषाक्षरैः) निबद्धैः पदैः द्रुतेन तालेन लयेन च सहितं चित्तं प्रनर्तयति (इव) तत् तोटकम् इति कथ्यते। किमिदं द्रुतं, कोऽयं तालः, कश्चासौ लय इति पृष्टे - यद्यपि सङ्गीतसंबद्धमिति आलङ्कारिकैः स्पष्टतया सामान्यजनैः सङ्क्षेपतया च ज्ञायते, तथाऽपि कोशादिग्रन्थानां पर्यालोचनेन एषां पदानाम् अर्थः अस्मिन् वृत्ते कीदृशं सार्थक्यं भजते, कथञ्च च सुष्ठु सङ्गच्छते इति ज्ञातुं शक्यते। अमरकोशे प्रथमकाण्डे अष्टमे नाट्यवर्गे -

**विलम्बितं द्रुतं मध्यं तत्त्वमोघो घनं क्रमात्।**
**तालः कालक्रियामानं लयः साम्यमथास्त्रियाम्॥**[6]

इति न केवलं लिङ्गनिर्देशः अपि च अर्थनिर्देशः कृतः।

---

[1] छन्दोमञ्जरी (छ.म.), द्वितीयः स्तवकः, जगत्यधिकारः - ६

[2] वृत्तरत्नाकरः(वृत्त.) 3.48

[3] श्रीमन्नारायणीयम् (ना.) 55.1

[4] ना. 55.10

[5] सुवृत्ततिलकम् (सु.ति.) २.१६

[6] अमरकोशः 1.8.9

अस्य व्याख्यावसरे द्रवन्ति त्वरन्ते करचरणादयः अत्र इति द्रुतम् इति व्याख्यातृभिः व्युत्पत्त्या सह अर्थः निर्दिष्टः। तथा च अस्मिन् वृत्ते प्रणीतानां पद्यानां श्रवणेन पाठकानां चित्तं त्वरते खलु। किञ्च कालक्रियामानं तालः इति तालस्य लक्षणम्। तलन्ति गीतवाद्यनृत्तानि तिष्ठन्ति अत्र इति तालशब्दस्य व्युत्पत्तिः। तदनुरोधेन अस्मिन् वृत्ते रचितानां पद्यानां श्रवणेन चित्तं पौनःपुन्येन एतत्पद्यं श्रोतुम् , तस्य श्रवणकाले मनसा नर्तयितुं च उद्युङ्क्ते इत्यत्र नास्ति विदुषां काचिद् विप्रतिपत्तिः। किञ्च पद्यानि गीतवाद्यनृत्तेष्वपि अभिनयादिक्रियायोग्यानि भवन्ति इत्यपि स्फुटमेव। एवं लीयते अत्र इति लयः। प्रकृते च एषां पद्यानां श्रवणेन चित्तम् (मनः) एष्वेव पद्येषु लीयते इति द्रुततालयैरेव चित्तं एभिः पद्यैः प्रनर्तयति अस्मिन् वृत्ते।

न केवलम् एतावान् विशेषः। अपरोऽपि कश्चन विशेषः कथितः वृत्तस्यास्य विषये - **रूक्षाक्षरैः पदैः** इति। रूक्षाक्षरं नाम परुषाक्षरम् इति। तन्नाम कठ्वक्षरैः महाप्राणैः इति वा वक्तुं शक्यम्। तदपि पद्येषु द्रष्टुं शक्नुमः। यथा- **घोरतरं फणिनं कृतधीर्भगवन्** इति। न केवलमत्र, अपि च अस्मिन् दशके विद्यमानेषु अन्येषु पद्येषु अपि एतद्वैशिष्ट्यं द्रष्टुं शक्नुमः। वर्गाणां द्वितीयचतुर्थाक्षरयोः, मूर्धन्याक्षराणां, महाप्राणानां च प्रयोगप्राचुर्यं वर्तते। अन्यानि उदाहरणानि यथा - **भुवनत्रयभारभृतो भवतो गुरुभारविकम्पिविजृम्भिजला**[1], **अथ दिक्षु विदिक्षु परिक्षुभितभ्रमितोदरवारिनिनादभरैः**[2] , **ज्वलदक्षिपरिक्षरदुग्रविषश्वसनोष्मभरः स महाभुजगः**[3]। यद्यपि रूक्षाक्षरैः पदैः निबद्धं तथाऽपि दरीदृश्यमानं समासविरलत्वम् अस्य वृत्तस्य पौनःपुन्येन श्रवणस्य, चित्तनर्तनस्य च कारणान्तरं भवति। यथा - **अखिलेषु विभो भवदीयदशाम् अवलोक्य जिहासुषु जीवभरम्**[4], **जहृषुः पशुपाः तुतुषु- र्मुनयो ववृषुः कुसुमानि सुरेन्द्रगणाः**[5]॥

**वंशस्थम्**

इदमपि वृत्तं जगत्यधिकारे एव वर्तते। अस्य लक्षणं छन्दःसूत्रे इत्थं वर्तते - **वंशस्था ज्तौ ज्रौ**[6] इति। यस्य वृत्तस्य पादे जगणतगणौ जगणरगणौ च भवतः तद्वृत्तं वंशस्थम् इति गीयते। एतदेव छन्दोमञ्जर्यां - **वदन्ति वंशस्थविलं जतौ जरौ**[7] इति। केदारभट्टेन च **जतौ तु वंशस्थमुदीरितं जरौ**[8] इति

---

[1] ना. 55.3

[2] ना. 55.4

[3] ना. 55.6

[4] ना. 55.8

[5] ना. 55.10

[6] छ.सू. 6.29

[7] छ.म., द्वितीयः स्तवकः, जगत्यधिकारः - २

[8] वृत्त.३.४६

कथितम्। इत्थञ्च ज्ञायते यद् यस्मिन् पादे जगणः, तगणः, जगणः, रगणश्चेति क्रमेण वर्तते तद्वंशस्थवृत्तम् इति दीयते। जगणस्तु मध्यगुरुघटितः गणः, अन्तिमलघुघटितः तगणः, मध्यलघुघटितश्च रगणः इति वृत्ते विद्यमानानां त्रयाणां गणानाम् अक्षराकारः। श्रीमन्नारायणीये यद्यपि द्वित्राणि दशकानि वंशस्थवृत्ते प्रणीतानि दृश्यन्ते, तथाऽपि अत्र उदाहरणरूपेण शकटासुरवधवर्णनपरं द्विचत्वारिंशं दशकं स्वीक्रियते। इदञ्च दशकं -

**कदापि जन्मर्क्षदिने तव प्रभो निमन्त्रितज्ञातिवधूमहीसुरा।**
**महानसस्त्वां सविधे निधाय सा महानसादौ ववृते व्रजेश्वरी॥**[1] इत्यारभ्य
**प्रपूजितैस्तत्र ततो द्विजातिभिः विशेषतो लम्भितमङ्गलाशिषः।**
**व्रजं निजैर्बाल्यरसैर्विमोहयन् मरुत्पुराधीश रुजां जहीहि मे॥**[2]

इत्यन्तम् एकादशपद्यात्मकम्। शकटासुरवृत्तान्तः प्रतिपादितः अस्मिन् दशके। अत्र निहितं स्वारस्यं किमिति ज्ञातुं क्षेमेन्द्रस्य सुवृत्ततिलकोक्तं वंशस्थस्य गुणदोषलक्षणं परामृष्टव्यम्। तच्च यथा -

**असमस्तपदैः पादसन्धिविच्छेदसुन्दरम्।**
**सर्वपादैर्विसर्गान्तैर्वंशस्थं यात्यनर्घताम्॥**[3] इति।

अस्य श्लोकस्य प्रथमार्धे अस्य वृत्तस्य गुणः प्रोक्तः वर्तते। असमस्तपदैः निबद्धं स्याद् इति प्रथमो गुणः। तद्रीत्या यदि आलोचयामः, तर्हि प्रथमे पद्ये एव तत्सुस्पष्टं ज्ञायते यत् **कदापि जन्मर्क्षदिने तव प्रभो** इति समासविरलत्वं दृश्यते। न केवलं तत्र, इतोऽपि स्पष्टतया अस्य दशकस्य पञ्चमे पद्ये द्रष्टुं शक्नुमः। तद्यथा -

**कस्को नु कौतस्कुत एष विस्मयो विशङ्कटं यच्छकटं विपाटितम्।**
**न कारणं किञ्चिद् इहेति ते स्थिताः स्वनासिकादत्तकराः त्वदीक्षकाः॥**[4]

इत्थम् अस्त्विदम्, अधुना द्वितीयः गुणः क इति चेत् पादसन्धिविच्छेदः इति। पादान्ते सन्धिविच्छेदः यदि स्यात् तर्हि तद्गुणाय कल्पते इति प्रोक्तं क्षेमेन्द्राचार्येण। तमिममपि गुणमत्र दशके द्रष्टुं शक्नुमः। केवलं द्वितीयश्लोकं विहाय सर्वेषु अपि अन्येषु श्लोकेषु पादान्ते (विशिष्य विषमे पादे) सन्धिविच्छेदं द्रष्टुं शक्नुमः। इत्थं न केवलं गुणोपेतं दशकमिदम्, अपि तु दोषहीनं दशकम्। तदर्थस्तु पूर्वोक्तसुवृत्ततिलकस्य श्लोकस्य द्वितीयार्धे अस्य वंशस्थवृत्तस्य दोषः कः स्यादिति उक्तं वर्तते। **सर्वपादैः**

---

[1] ना. 42.1

[2] ना. 42.11

[3] सु.ति. 2.17

[4] ना. 42.5

**विसर्गान्तैः वंशस्थं याति अनर्घताम्** इति। अधुना पादान्ते सन्धिविच्छेदः स्यात् परं विसर्गान्तैः पादैश्चेत् तद्दोषाय कल्पते इत्युक्ते तादृशानां पदानां तथैव अर्थविनियमोऽपि तदनुगुणं यथा स्यात् तथा कृत्वा पद्यस्य रचना कर्तव्या खलु। तत्रैव निहितमस्ति ग्रन्थकर्तुः नैपुण्यम्। तादृशं ग्रन्थकर्तुः नैपुण्यं श्रीमन्नारायणीये द्रष्टुं शक्नुमः। अस्मिन् दशके नैकमपि पद्यं सर्वेषु पादेषु विसर्गोपेतं रचितमस्ति। तावता किम् एकस्मिन्नेव पद्ये पादान्तेषु विसर्गविरलत्वमपि द्रष्टुं शक्नुमः। इत्थञ्च अस्मिन् दशके कविः शकटासुरभञ्जनं वर्णयन् वृत्तस्य गुणदोषान् मनसि निधाय स्वीयनैपुण्यमपि प्रादर्शयदिति सुष्ठु ज्ञायते।

**द्रुतविलम्बितम्**

जगत्यधिकारे विद्यमानम् अन्यदिदं द्रुतविलम्बितं नामकं वृत्तम्। छन्दःसूत्रे **द्रुतविलम्बितं न्भौ भ्रौ**[1] इत्यनेन सूत्रेण अस्य वृत्तस्य स्वरूपं प्रतिपादितम्। छन्दोमञ्जर्यां वृत्तरत्नाकरे च - **द्रुतविलम्बितमाह नभौ भरौ**[2] इत्यस्य स्वरूपं निर्दिष्टं वर्तते। इत्थञ्च ज्ञायते यद् अस्मिन् वृत्ते द्वादशाक्षराणि स्युः इति। अस्य पादे नकारभकारौ भकाररेफौ इति नगण-भगण-भगण-रगणाः क्रमेण भवेयुरित्यपि ज्ञायते। नगणस्तु सर्वलघ्वात्मकः गणः, भगणः आदिगुरुघटकः, रगणश्च मध्यलघुघटकः गणः। एभिः चतुर्भिः गणैः पादमेकं पूर्यते अस्मिन् वृत्ते। तथा च श्रीमन्नारायणीये अस्मिन् वृत्ते नैकानि दशकानि रचितानि। यथा पूतनामोक्षवर्णनपरं चत्वारिंशं दशकम्, कालियस्य भगवदनुग्रहवर्णनपरं षट्पञ्चाशत्तमं दशकम्। तत्र पूतनामोक्षवर्णनपरं दशकं स्वीकृत्य विमर्शः क्रियते। विमर्शनात्पूर्वं क्षेमेन्द्रस्य वचनानि स्मर्तव्यानि।

**प्रारम्भे द्रुतविन्यासं पर्यन्तेषु विलम्बितम्।**
**विच्छित्त्या सर्वपादानां भाति द्रुतविलम्बितम्॥**[3]

यत्र द्रुतविलम्बितवृत्ते विरचिते पद्ये प्रारम्भे द्रुतगतिः विन्यस्ता सती पर्यन्तेषु विलम्बिता गतिः परामृष्टा, तादृशं पद्यं श्रवणकौशलम् अत्यधिकं भजते इत्यर्थः। अस्य नायमर्थः यत् प्रारम्भे विलम्बगतिः यदि परामृष्टा तदा तद्गुणं त्यजति इति। यतः क्षेमेन्द्राचार्य एव स्वीये सुवृत्ततिलके अस्य द्रुतहीनं विलम्बितं च यथा इति विलिख्य स्वेन अपरामृष्टा प्रारम्भिका द्रुतगतिरपि दर्शिता। अस्तु तत्तथा। प्रकृतमनुसरामः। श्रीमन्नारायणीये चत्वारिंशे दशके द्रुतविलम्बितस्य क्षेमेन्द्रेण निर्दिष्टान् प्रदर्शितांश्च गुणान् द्रष्टुं शक्नुमः। इदञ्च च दशकं -

**तदनु नन्दममन्दशुभास्पदं नृपपुरीं करदानकृते गतम्।**
**समवलोक्य जगाद भवत्पिता विदितकंससहायजनोद्यमः॥**[1] इत्यनेन पद्येन आरभ्य

---

[1] छ.सू. 6.31

[2] छ.म., द्वितीयः स्तवकः, जगत्यधिकारः - 10, तथा वृत्त. 3.49

[3] सु.ति. 2.18

**भुवनमङ्गलनामभिरेव ते युवतिभिर्बहुधा कृतरक्षणः।**

**त्वमयि वातनिकेतननाथ मामगदयन् कुरु तावकसेवकम्॥** [2] इत्यनेन पद्येन समाप्तिमेति।

अधुना दशके निहितं वृत्तगुणांशं विचारयामः। द्रुतम् इत्यस्य त्वरिता इत्यर्थस्तु ज्ञातपूर्व एव। तथैव विलम्बितम् इति पदस्य अर्थस्तु - अस्मिन् दशके कविः एकस्मिन् पद्ये आदौ द्रुतगतिं प्रदर्श्य पर्यन्ते विलम्बितगतिम् निरदिशत्। के इमे द्रुतविलम्बितगती इति पृष्टे पदानां प्रयोगेण ज्ञातुं शक्नुमः। यत्र सरलतया पदानि विभक्तुं शक्नुमः, तत्र विलम्बितगतिः वर्तते इति, यत्र च समासः दृश्यते तत्र द्रुतगतिः निर्दिष्टा वर्तते इति च ज्ञेयम्। तेन किमिति पृष्टे - द्रुतगत्यां समासः श्रूयेत येन तत्पदं किञ्चिद्विच्छेदराहित्येन उच्चारणीयं भवति। विलम्बितगत्यां च समासहीनं पदं प्रयुज्येत येन पदस्य मन्दं मन्दम् उच्चारणेनापि दोषः न स्यात्।

अधुना प्रथमं पद्यमेव स्वीकुर्मः। तत्र हि क्रमेण पदानां छेदः स्पष्टतया ज्ञायते। यथा - तदनु, नन्दम्, अमन्दशुभास्पदं, नृपपुरीम् इत्यादिरूपेण। अत्र हि समासाभावेन पदानि प्रयुक्तानि इत्यतः विलम्बिता गतिः परामृष्टा इति ज्ञायते। पुनश्च अस्यैव पद्यस्य अन्ते **विदितकंससहायजनोद्यमः** इति समस्तपदं निविश्य द्रुतगतिः परामृष्टा। इत्थं च विलम्बितगत्या आरभ्य द्रुतगत्यां समाप्तिम् अकरोत् कविः। एवमेव अस्मिन् दशके अन्यस्मिन् पद्ये प्रारम्भे द्रुतगतिं परामृश्य अन्ते विलम्बितगत्या समाप्तिमपि अकरोत् कविः। तच्च पद्यं यथा -

**ललितभावविलासहृतात्मभिः युवितिभिः प्रतिरोद्धुमपारिता।**

**स्तनमसौ भवनान्तनिषेदुषी प्रददुषी भवते कपटात्मने॥** [3]

अत्र आदौ ललितभावविलासहृतात्मभिः इति समस्तपदेन द्रुतगत्या प्रारभ्य, अन्ते प्रददुषी भवते कपटात्मने इति समासाभावेन विलम्बितगत्या पद्यस्य समाप्तिम् अकरोत्। पुनश्च स्मार्यते यत् समासगत्यां पदस्य क्वचित्सकृदुच्चारणं श्रवणकौशलं भजते। विलम्बितगत्यां च मन्दोच्चारणेन तत्साध्यते। इत्थम् अस्मिन् दशके पद्येषु द्रुतगत्या आरभ्य विलम्बतिगत्यां समाप्तिः, विलम्बितगत्या प्रारभ्य द्रुतगत्यां समाप्तिरिति द्वे अपि शैली कविना उपयुक्ते।

अधुना अपरः कश्चन विशेषः अस्मिन् वृत्ते वर्तते यश्च स्पष्टं वरीवर्त्ति अस्मिन् दशके। स च विशेषांशः क्षेमेन्द्रेण **विच्छित्त्या सर्वपादानाम्** इति निर्दिष्टः। इदं कदाचित् कष्टकरं स्यात्। यतः द्रुतगत्यां समासः परामृष्टव्यः परं पादान्ते विच्छित्तिरपेक्षिता, येन अर्थस्य विच्छित्तिरपि न स्यादिति। तथाऽपि

---

[1] ना. 40.1

[2] ना. 40.10

[3] ना. 40.6

अस्मिन् दशके अयमपि विशेषांशः सुष्ठु परामृष्टः वर्तते अस्मत्कविना। उदाहरणार्थं पूर्वोक्तमेव पद्यं स्वीकुर्मः यतः तत्रैव प्रारम्भे द्रुतगतिः परामृष्टा। परं तत्रापि पादान्ते विच्छित्तिः प्रदत्ता येन अर्थस्य विच्छित्तिः नाभवत्। यथा - **ललितभावविलासहृतात्मभिः** इत्युक्त्वा समनन्तरमेव **युवतिभिः** इति विशेष्यमपि समीपे सन्निवेश्य पादान्ते विच्छित्तिमपि दत्त्वा अर्थस्य विच्छित्तिम् अकुर्वन् अर्थावबोधे सौकर्यञ्च अकल्पयत्। यद्यपि एकस्मिन् पद्ये समासगतिवशात्पादान्ते विच्छित्तिः न प्रदत्ता कविना, तथाऽपि अस्य वृत्तस्य गुणदोषविचारप्रसङ्गे स्वयमेव तादृशमपि उदाहरणं प्रदर्शयन् तन्न दोषाय कल्पते इति क्षेमेन्द्रेण उक्तत्वात्, प्रमुखरूपेण अर्थविच्छित्तिः न स्यादिति धिया कविना तथा कृतत्वाच्च तन्न दोषाय कल्पते।

**उपसंहारः**

एवं न केवलमिमानि प्रोक्तानि वृत्तानि अपि च काव्यरचनायां प्रयुक्तानि अन्यान्यपि वृत्तानि गुणोपेतानि दोषरहितानि वर्तन्ते। तत्र एकचत्वारिंशद्दशके उपजातिः प्रयुक्ता वर्तते। तत्र इन्द्रवज्रोपेन्द्रवज्रयोः मिश्रणम् उपजातिरिति ज्ञायते। परं तयोः मिश्रणे नैके प्रभेदाः वर्तन्ते। तेषु मालाख्यः अन्यतमः भेदः कविना प्रयुक्तः। तत्रापि विशिष्टं कारणमस्ति यच्च प्रोक्तं क्षेमेन्द्रेण -

**सूत्रस्येवात्र तीक्ष्णाग्रं श्लोकस्य लघुना मुखम्।**
**कर्णं विशति निर्विघ्नं सरलत्वं च नोज्झति॥**[1] इति।

तदर्थः - यदि इन्द्रवज्रोपेन्द्रवज्रयोः मिश्रणेन उपाजात्या पद्यं विरच्यते, तथैव तस्याः बहुषु प्रभेदेषु आद्यक्षरं लघुपूर्वकं यथा भवति तथा पद्यं विरच्यते यदि, तर्हि तत्पद्यं निर्विघ्नं कर्णं प्रविशति, सरलत्वं च भजते इति। तद्रीत्या अस्मिन् दशके निशम्य, मदङ्ग, चित्रं, दिने, गृहेषु इत्येवं प्रायः प्रथमं लघ्वक्षरेण आरभ्यमाणैः पदैः पद्यानां रचनां कुर्वन् श्रोतुं सुखकरं भवति इति यच्च क्षेमेन्द्रेण प्रोक्तं तन्नियमाकारोऽपि कविना परामृष्टः वर्तते। एवं बहु वक्तुं शक्यते तथाऽपि आरम्भे उक्तरीत्या विस्तरभयान्नान्येषां वृत्तानां विमर्शः क्रियते।

इत्थं न केवलं प्रोक्तेषु दशकेषु वा प्रोक्तेषु पद्येषु किन्तु अन्येषु दशकेषु अन्येषु पद्येषु च कविः स्वीयवृत्तनैपुण्यं सुष्ठु प्रादर्शयत्। नैतावता, अपि च पूर्ववर्तिभिः कैश्चिदाचार्यैः वृत्तविन्यासे येंऽशाः गुणत्वेन निर्दिष्टाः तान् अंशानादाय, ये च अंशाः क्वचिद्दोषत्वेन दिङ्मात्रेण सूचिताः तान् अंशान् दूरतः त्यक्त्वा न केवलं स्तोत्ररूपेण अपि तु काव्यरूपेणापि अस्य वैशिष्ट्यं यथा दरीदृश्येत तथा अस्य श्रीमन्नारायणीयाख्यस्य स्तोत्रकाव्यस्य रचनाम् अकरोदिति स्पष्टतया ज्ञायते। किञ्च श्रीमद्भागवतस्य कथाः

[1] सु.ति. 2.8

सर्वा अपि अत्र शतेषु दशकेषु सुष्ठु संक्षिप्ताः दृश्यन्ते इत्यस्मात् कारणात् श्रीमद्भागवतस्य इव अस्यापि न केवलं पूज्यत्वं किन्तु पारायणपरत्वमपि वर्तते। अनया कृत्या यथा आचार्यस्य नारायणभट्टस्य भक्तेः परा काष्ठा विदुषां प्रत्यक्षगोचरा भवति या च व्याख्यातृभिः आदृता अनुभूता च तथैव आलङ्कारिकैरपि काव्यदृष्ट्या अस्यां कृतौ लोकोत्तरत्वं, पाण्डित्यं, गुणभूयस्त्वञ्च अनुभूयते आद्रियते च इत्यस्ति श्रीमन्नारायणीयस्य वैशिष्ट्यम्। नूतनः कश्चन प्रयासः अस्मिन् प्रबन्धे विहितः इत्यस्मात् कारणात् कृते चास्मिन् वृत्तविमर्शे विदुषाम् अभिप्रायः विमर्शश्च यद्यस्ति तर्हि सानन्दं तत्स्वागतीक्रियते अग्रिमे च प्रबन्धे तत्समीक्रियते इति च निवेद्यते मया इति शम्॥

************

**उपयुक्तग्रन्थसूची** -

गणपतिशास्त्री (सं.) [1912]. नारायणभट्टप्रणीतं श्रीमन्नारायणीयम्, देशमङ्गलवार्यकृतया भक्तप्रियाख्यव्याख्यया समेतम्, तिरुवनन्तपुरम् (अनन्तशयनम्) - राजकीयमुद्रणालयः॥

रामनाथः (सं) [1971]. अमरकोशः दक्षिणात्यव्याख्योपेतः, चेन्नै - अडयार् ग्रन्थालयः अनुसन्धानकेन्द्रञ्च॥

वैद्यनाथशास्त्री (सं.), [1927]. भट्टकेदारप्रणीतः वृत्तरत्नाकरः, भट्टनारायणभट्टीयव्याख्यासहितः, श्रुतबोधच्छन्दोमञ्जरीसुवृत्ततिलकैश्च समेतः, वारणासी - चौखम्बा संस्कृत सीरीज आफिस॥

शङ्करवारियर् (प्र.) [1957]. नारायणभट्टपादप्रणीतं श्रीमन्नारायणीयम्, कोणत्त् कृष्णवारियर् महाशयप्रणीतया बालबोधिन्याख्यया व्याख्यया समेतम्, पूर्णवेदपुरी - राजा प्रस्॥

श्रीकेदारनाथवर्मा (प्र.) [1909]. श्रीमन्महर्षिपिङ्गलाचार्यप्रणीतं छन्दःसूत्रम्, अखिलानन्दशर्मप्रणीतवैदिकभाष्योपेतम्, मेरठनगरम् - तुलसीरामस्वामी मुद्रणालयः॥

सोमसुन्दरदीक्षितः (अनु.) [1954]. श्रीमन्नारायणीयम् - द्रविडानुवादः, आलत्तूर् - श्रीरामायणप्रकाशनभवनम्॥

*****

# स्तोत्रकाव्येषु श्रीमन्नारायणीयस्य स्थानम्

**Dr. श्री. नरसिंहः**

उपप्राचार्यः – संस्कृतविभागः,

द्वारकादास -गोवर्धनदास वैष्णवकलाशाला

अरुम्बाक्कम् – चेन्नै – 600106, तमिल्नाडु

Email: srinarasimhan05@gmail.com

9940571808

मनुष्यसमुदायः चिन्तनाशक्त्या स्वजीवने आहार-वास-सम्पत्ति-कीर्ति-सुख-सौख्यादीनां लौकिकसम्पत्तीनां, तथा तत्प्राप्तिविषयकाणाम् अंशानामुपरि यथाकालं उचितां श्रद्धां विदधाति निरन्तरमिति अनेकेषां जीवने दरीदृश्यते। परं ततोऽप्यधिकविशिष्टस्य सर्वकालेष्वपि नित्यस्य, ईश्वरध्यानसाधनविषयकस्य, अज्ञाननाशकहेतुकस्य, तुरीयलक्ष्यप्राप्तिहेत्वाधारितस्य पारमार्थिक-जीवनस्य वास्तविकं स्वरूपं किं, तस्य यापनं कथं, तदर्थं करणीयं किं, आश्रयणीयाः विषयाः तथा महापुरुषाश्च के, जीवने विपरीतदशायां तन्मार्गे कथं स्थिरं स्थातव्यमिति विषयेऽपि उचितां, शाश्वतीं, नैष्ठिकीं श्रद्धां जीवात्मानः वयं संप्रदर्शयामः चेदेव अस्माकं जीवनं सार्थकं भवति । नो चेत् लौकिकेच्छापूरणार्थमेव पुनः मायातिरोहितं जन्म भविष्यतीति

**अनेकचित्तविभ्रान्ता मोहजालसमावृताः। प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ॥** (भ.गी.16.16)

**तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥** (भ.गी.14.15)

इति श्रीमद्भगवद्गीताप्रमाणोक्तदिशा अज्ञानबलेन बद्धदशायामेव भवाम इत्यत्र नास्ति संशयः । भवन्तु नाम जन्मान्तराणि, परं सन्तु ते सार्थकानि सफलानि ईश्वरप्राप्तिफलदानि च इत्येव पूर्वजानां प्रार्थना।

एतदर्थं सतां मार्गमनुसृत्य, अस्माकं जीवनलक्ष्यं उत्तमं कल्पयित्वा, तदर्थमाचरणीयान् सम्यक् ज्ञात्वा, सतां मार्गमनुसृत्य जीवनं यापयामः चेदेव, अस्माभिः संप्राप्तस्य विशिष्टमनुष्यजीवनस्य वास्तविकं लक्ष्यं प्राप्तुं, तथा तदर्थं क्रियमाणेषु कर्मसु विवेकवैराग्यादीन् प्रदाय अस्मान् बोधयति, अथवा कारयति महापुरुषसङ्गद्वारा परमात्मा मोक्षप्रदः श्रीमन्नारायणः ।

लोकक्षेमाय भगवान् एतेभ्यः साधुजनेभ्यः कदाचित् कष्टं दत्वाऽपि सर्वजनहितकरान् विषयान् तद्वारा बहिरानयति इत्यमुं बोधं एतादृशानां जीवनम् आन्तं पठामः चेदेव ज्ञातुं शक्यते । सामान्यजनानां जीवने सुख-दुःखानुभवजनिताः अनुभवाः भिन्नाः, महापुरुषाणां जीवनानुभवाश्च भिन्नाः। सुखं सुखमिति,

तथा दुःखं दुःखमित्येव पश्यतां, तदुपरि गन्तुम् अशक्तानां सामान्यानां पुरुषाणां मनोबलं न्यूनमेव, यस्य कारणेन तस्मिन् मग्नैरनेकैः सुख-दुःखेभ्यः कः बोधः प्राप्तव्यः इति न ज्ञायते । अन्यत्र पश्यामश्चेत् मोक्षमार्गे प्रयाणं कर्तुमिच्छुकस्य अथवा कुर्वाणस्य यात्रिकस्य जीवनकाले सञ्जाताः आध्यात्मिक-आधिभौतिक- आधिदैविकरूपाः, अथवा तत्तकालोत्पन्नाः शारीरिक-मानसिकक्लेशाः कीदृशं विपरिणामं तन्मनसि, तल्लक्ष्ये च कल्पयन्ति, कथं वा तं साधकं अथवा उपासकं च्यावयन्ति लक्ष्यादिति वेदपुराणेतिहासादयः सप्रमाणं निरूपयन्ति। अत एव सुख-दुःखोपरि विद्यमानं वास्तविकं सत्यं ज्ञातुं, तदवगन्तुं च प्रथमं स्थिरबुद्धिं, निर्मलहृदयं च सम्पाद्य ईश्वरे परां भक्तिं च प्राप्तुम् अस्मत्सदृशैः सामान्यैः किं करणीयमिति प्रदर्शयितुम् बोधयितुं च ,एते दयार्द्रचित्ताः, भगवद्भक्तिवर्धकरूपान् अमूल्यग्रन्थान् अथवा स्तोत्राणि वा विरचय्य अस्मादृशानां मनसि भगवद्विषयकप्रीत्युत्पादनरूपबीजारोपणकार्यं सम्यक् कृतवन्तः, अकुर्वन् तथा करिष्यन्ति च ।

पूर्वं कठिनपरिश्रममनुभूय महापुरुषैः तालपत्रेषु रचिताः, मध्ये नष्टाः, पुनः अन्यैः परिश्रमेण सङ्कलिताः इति सहस्रवर्षानन्तरमपि भक्ताय मुमुक्षवे एते ग्रन्थाः इदानीमपि मार्गदर्शनं भिन्नभिन्नप्रकारैः कुर्वन्ति, तन्मनसि आनन्दानुभवं कल्पयितुं शक्नुवन्ति इत्यमुं विषयं स्मरामः चेदेव महान् प्रमोदः जायते हृदये । पुनः मनसि महती श्रद्धा च तेषामाश्रयणे, अध्ययने तथा तदुक्तविषयाणाम् अर्थावबोधने च सञ्जायते । कारणं तेषु ग्रन्थेषु गूढतया निरन्तरं विद्यमानः ईश्वरानुग्रहः एव । विशेषतः अनेके ईश्वराराधकाः भक्ताः जीवने आत्मोद्धारणार्थं नित्यपारायणे श्रीमद्रामायण-श्रीमन्महाभारत-श्रीमद्भागवतेभ्यः संक्षेपरामायण-सुन्दरकाण्ड-आदित्यहृदय-विष्णुसहस्रनामस्तोत्र-श्रीमद्भगवद्गीता-उद्धवगीतादिभ्यः स्वस्वाभिलाषानुगुणं किमपि स्वीकृत्य, वैयक्तिकं वा समूहतः वा संस्तुत्य भक्तिपरम्परां संरक्षन्ति । पूर्वनिर्दिष्टैः ग्रन्थैः अथवा भगवद्विषयकस्तोत्रैःसमाकर्षिताः अनेके भगवद्भक्तिरसभरितहृदयाः भक्तिसंवर्धनार्थं भारतदेशे प्रतिप्रान्तेषु काले काले संभूय संस्कृतभाषायामथवा प्रान्तीयभाषासु वा सद्विषयप्रचारविषये स्तोत्राणि विरचय्य महदुपकृतवन्तस्सन्ति ।

निर्गुणब्रह्मोपासननिरताः श्रीशङ्करभगवत्पादाः वा तदनुयायिनः आचार्यपुरुषाः अथवा मधुसूदन-सरस्वतीप्रभृतयो वेदान्तिनः, अथवा आजीवं सगुणोपासननिरताः श्रीमद्रामानुज–मध्वाचार्य–नायन्मार्–आल्वार् प्रभृतयः अवतारपुरुषाः वा, अथवा ततः पूर्वं, तत्पश्चात् वा जनिताः महापुरुषाः, स्वभावात् परमयोगिनः अपि भक्तिमार्गेणैव भगवन्तं विशेषतः समाराध्य, लोकः अपि उद्धरतु इति मानवसमुदायाय बहूपकृतवन्तः इत्येव विशेषः ।

एतेषां भक्तशिरोमणीनां पङ्क्तौ सञ्जातस्य श्रीमन्नारायणीयाख्यस्तोत्रग्रन्थस्य रचयितुः केरलप्रदेशस्थमेल्पत्तूर्ग्रामे सञ्जातस्य **श्रीनारायणभट्टत्रिवर्यस्य** स्थानं विशेषतया परिगण्यते । एतस्य

महापुरुषस्य जीवनचरित्रं पश्यामश्चेत् स वातरोगेण पीडितः गुरुवायूरुक्षेत्रवासिनं श्रीकृष्णं प्रतिदिनं दशभिः श्लोकैः संस्तुत्य शतदिनानन्तरं स्वानुभूतरोगान्मुक्तः, तेन साकम् ईश्वरदर्शनमपि प्राप्तवानित्येव विशेषः ।

शतसंख्याकदशकेषु विभक्तं, चतुरधिकसहस्रसङ्ख्यात्मकमिदं श्रीमन्नारायणीयं, व्यासभगवता विरचितस्य श्रीमद्भागवतस्य सारभूतस्तोत्रत्वेन परिगणितं तथा सम्मानितं सत्, सामान्यैरपि आश्रितम् अभिप्रायभेदं विना देशे अनेकेषु गृहेषु श्रीकृष्णभक्तैः प्रतिदिनं अथवा विशेषपर्वणि दिनेषु वा अनवरतं संपठ्यते इत्यत्र नास्ति संशयः। तिरुमलाक्षेत्रे यथा सुप्रभातं तथा विष्णुसहस्रनामस्तोत्रं श्राव्यते अनेकत्र, तथा भवति विशेषतः केरलप्रदेशे, विशिष्य **गुरुवायूरु**नामके श्रीकृष्णक्षेत्रे। अतिविशेषतः तमिल्नाडु-प्रान्तस्य कुम्भकोणजिलासमीपस्थ सेङ्गालिपुरनिवासिना **ब्रह्मश्री अनन्तरामदीक्षितवर्येण** श्रीमन्नारायणीय-स्तोत्रमाहात्म्यप्रशस्तिः उपन्यासरूपेण देशे विद्यमानसर्वप्रान्तेषु तस्य जीवनकाले बहुधा कृता, यस्य प्रभावेण अनेके श्रीमन्नारायणीयं प्रतिदिनम् आस्वाद्य कृष्णभक्तिरसास्वादनपराः सञ्जाताः इदानीमपि तत्पुण्यकर्म समाचरन्तस्सन्ति। स्वस्य स्तोत्रकाव्ये भगवद्भक्ति संवर्धनेन साकं रचयिता श्रीनारायणभट्टत्रिवर्यः अस्मिन् श्रीमद्भागवतग्रन्थे यथा वर्णनं क्रमशः कृतं तद्वत् स्वयं कृत्वा, इतोऽपि अनेकान् रुचिकरान् विषयानपि प्रतिपाद्य पठितृणां मनसि रसास्वादं जनयति इति अस्य स्तोत्रस्य अध्ययनेन अवगम्यते ।

अधोनिर्दिष्टैः कैश्चनश्लोकैः स्थालीपुलाकन्यायेन वयमिदानीम् अनुभवामः। परब्रह्मणः ज्ञानं निराकारध्यानं वा योगिनां हृदयगुहायामाचर्यते ध्यानादिभिः सोपानैः। परमेतत् सामान्यजनाय ऊहातिरिक्तः विषयः एव । कारणं ज्ञानं वा उपासनामार्गः वा अधिकारिबलमवलम्ब्यैव भवति । अत एव भगवान् स्वयम् अर्चामूर्तिः भूत्वा विग्रहाराधनेनैव सन्तुष्टः सामान्यजनोद्धारणायापि विराजते प्रतिक्षेत्रे इति इमं तत्त्वम् -

**सत्त्वं यत्तत्पराभ्याम् अपरिकलनतो निर्मलं तेन तावत्**
**भूतैः भूतेन्द्रियैस्ते वपुरिति बहुशो श्रूयते व्यासवाक्यम् ।**
**तत्स्वच्छत्वाद्यदच्छादित परसुख चिद्गर्भनिर्भासरूपं**
**तस्मिन् धन्या रमन्ते श्रुतिमति मधुरे सुग्रहे विग्रहे ते ॥** (01.03)

इत्यनेन श्लोकेन मधुरशब्दैः भगवतः अर्चावतारस्य वैभवं वर्णयित्वा उपनिषन्निरूपितदिशा कथं सत्त्व-रजो-तमोगुणैरस्पृष्टं शुद्धसत्वमयं परं ब्रह्म, **निकटेषु निशामयामि नित्यं निगमान्तैरधुनाऽपि मृग्यमाणम् । (गोपालविंशतिः** 8) इति श्रीमन्निगमान्तमहादेशिकप्रोक्तदिशा सामान्यानपि आनन्दसागरे प्लावयितुं श्रीकृष्णरूपं धृत्वा आश्रितान् संसारसागरात् विमोचयति इति मधुरवचसा परमोत्कृष्टं तत्त्वं

निरूपयति कविः । कर्मयोग-ज्ञानयोग-राजयोगापेक्षया भक्तिरेव जीवस्य हृदयं भगवदनुग्रहप्राप्तिविषये सरलैः भगवद्विषयकश्रवण-सङ्कीर्तन-स्मरण-पादसेवन-अर्चन-वन्दन-दास्यादिभिः सोपानैः मार्गदर्शनं कृत्वा, अन्ते भक्तं आत्मनिवेदनार्थमपि परिपुष्णाति येन सः स्वजीवनस्य अन्तिमलक्ष्यमपि प्राप्नोति । अन्यमार्गस्य आचरणसन्दर्भे साधकस्य प्रयत्नाः ईश्वरप्रणिधानं प्रति तं नयन्ति चेत् लाभाय । अत एव ततः अपि विशिष्टतमस्य भक्तिमार्गस्य वैशिष्ट्यं –

**निष्कामं नियतस्वधर्मचरणं यत्कर्मयोगाभिधं**
**तद्दूरेत्यफलं यदौपनिषदज्ञानोपलभ्यं पुनः ।**
**तत्त्वव्यक्ततया सुदुर्गमतरं चित्तस्य तस्माद् विभो**
**त्वत्प्रेमात्मकभक्तिरेव सततं स्वादीयसी श्रेयसी ॥** (02.08)

इत्यनेन श्लोकेन स्पष्टतया इतरयोगमार्गापेक्षया भक्तियोगस्य वैशिष्ट्यं, सारल्यं, सर्वजनसाधारण्यं, भगवदनुग्रहप्राप्तिहेतुत्वं च स्पष्टीकरोति ।

अन्यदृष्ट्या पश्यामश्चेत् राजयोगसिद्धिमपि क्रमशः साधनाचरणेन सम्पादितवानयं भक्तशिरोमणिरिति चतुर्थदशकस्य पञ्चदशश्लोकान् पठामश्चेत् अवगन्तुं शक्नुमः । भगवतः चरणौ भक्त्याचरणार्थं कथं स्थिरशरीरं, मनः तथा प्राणशक्तिरावश्यकी येन साधकः आधिव्याधिरहितः स्वस्थस्सन् यम-नियमासन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधिरूपमष्टाङ्गयोगं यथाविधि यथार्हमुपास्य, षण्णां चक्राणामुपरि भासमानान् सूर्यमण्डल-ध्रुवमण्डलादीन् लोकान् सम्प्राप्य अन्ते प्रलयसमये क्रमशः मुक्तिमपि भगवदनुग्रहेण प्राप्नोतीति योगरहस्यमिदं –

**कल्यतां मम कुरुष्व तावतीं कल्यते भवदुपासनं यथा ।**
**स्पष्टमष्टविधयोगचर्यया पुष्टयाऽऽशु तव तुष्टिमाप्नुयाम् ॥** (04.01)

इत्यस्मात् श्लोकादारभ्य - **अर्चिरादिगतिमीदृशीं व्रजन् विच्युतिं न भजते जगत्पते ।**
**सच्चिदात्मकभवद्गुणोदयान् उच्चरन्तं अनिलेश पाहि माम् ॥** (04.15)

इत्यन्तिमश्लोकपर्यन्तं राजयोगक्रममपि स्पष्टतया वर्णितवान् यत् अन्यस्तोत्रेषु न दृष्टप्रायमेव । अन्यत्र च

**नाहं वसामि वैकुण्ठे योगिनां हृदयेष्वपि । मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद ॥ (नारदपुराणं)**

इति भगवदुक्तप्रकारेण भगवद्भक्तिमेव प्रधानतया मन्वानान् निर्मलहृदयवतः भागवतानेव आश्रयेम, येन भगवत्प्राप्तिः निश्चिता भवति जीवने । भगवत्प्रियाणां भागवतोत्तमानां प्रह्लाद-अम्बरीष-अक्रूर-उद्धव-कुचेल-विदुरादीनां चरित्रवैशिष्ट्यं यत् श्रीमद्भागवते विस्तारतया वर्णितं, तदत्र श्रीमन्नारायणीयेऽपि कविनाऽनेन विशेषपदप्रयोगैः ।

**द्रक्ष्यामि वेदशतगीतगतिं पुमांसं स्प्रक्ष्यामि किंस्विदपि नाम परिष्वजेयम् ।**

**किं वक्ष्यते स खलु मां क्वनु वीक्षितस्स्यात् इत्थं निनाय स भवन्मयमेव मार्गम् ॥** (72.04)

इत्यादिषु वर्णनेषु अक्रूरादीनां प्रेमभरितचेष्टाः स्वयमपि हृदये अनुभूय वर्णयति इत्येव वैशिष्ट्यम्। कारणं एकः भागवतः एव अन्यस्य भक्तिभरितहृदयाज्जनितान् भावान् अनुभवितुं शक्नोति। भगवद्दर्शनानन्तरं यमुनाजले अनुष्ठानकाले स्नानं कुर्वते अक्रूराय स्वीयमपूर्वं दर्शनं दत्वा आनन्दसागरे तं निमज्जयितुं भगवता अवकाशः कल्पितः । को वा जानाति भगवतः लीलाम् ! मथुराधिपतेरखिलं मधुरम् किल ! पुनश्च गोपिकानां कृष्णप्रीतिः कीदृशीति साक्षात् दृष्ट्वा स्वयमनुभवतु इति चिन्तनेनैव भगवान् श्रीकृष्णः भागवतमेलनं कल्पितवान् उद्धवं गोकुलं प्रति प्रेषयित्वा । तत्र सः भक्तशिरोमणिः गोपिकानामनितरसाधरण भक्तिं स्वयमनुभूय आश्चर्यचकितस्सन् कथं कृष्णं पुनः दृष्टवानिति वर्णयति -

**एवं भक्तिः सकलभुवने नेक्षिता न श्रुता वा**

**किं शास्त्रौघैः किमिह तपसा गोपिकाभ्यो नमोऽस्तु ॥** (76.11)

अन्योऽपि विशेषांशः अस्मिन् स्तोत्रकाव्ये दृश्यते यत् अयं श्रीनारायणभट्टत्रिः भगवद्गुणवर्णनसन्दर्भे वा इतरेषां चरित्रवर्णने वा भगवता सह सम्भाषणं कुर्वन्निव वर्णनं कृतवानिति ।

अन्यैस्तावत् भगवता एवमाचरितमित्येव नानाविधलीलाः स्वैरनुभूताः वर्णिताः । परमयं भिद्यते स्ववर्णने इतरेभ्यः । स्वेन पूर्वमाचरितायाः लीलायाः वर्णनं स्वयं पुनः कविमुखात् शृण्वन् तस्य अन्ते अङ्गीकारमपि शिरःकम्पनेन कृतवानित्यनेके सन्ति विशेषांशाः सन्ति वक्तुम् अस्य वर्णनसौन्दर्यविषये।

भगवतः श्रीकृष्णस्य अवतारलीलां सामान्यः अपि अनुभोक्तुं, तद्वारा कृष्णभक्तिं स्वीयान्तरङ्गे संवर्धयितुं च कथाभरितभगवद्गुणवर्णनं कविभिरनेकैः पद्यगद्येषु समाश्रितं यत् भारतस्य कोणे अपि निवसन्तः आबालगोपालास्सर्वेऽपि वारं वारं कथाश्रवणेन भगवद्विषयकभक्तिरसम् आस्वादयितुं अवकाशं निरन्तरं प्राप्नुवन्ति। लोकक्षेमार्थं भगवता श्रीमन्नारायणेन कृतानां दशावताराणां अतिविशेषतः कृष्णावतारकाले प्रदर्शितमहिम्नश्च अनेन कविना श्रीमन्नारायणीये द्वादशदशकात् आरभ्य ऊननवति-दशकपर्यन्तं नानाविधानि वृत्तान्युपयुज्य रसमयैः पद्यैः वर्णनं कृत्वा, स्वयञ्च अनुभूय पुनः पठितृणां प्रेमिकानां कृष्णरसिकानां मनांसि रञ्जयन्नस्ति इत्यत्र नास्ति संशयः । कालियनर्तनसमये विशेषतया भुजङ्गप्रयातवृत्तं समुपयुज्य कालियगर्वशमनसमये भगवता संप्रदर्शितं नूपुरक्वणनभरितमद्भुतं नृत्यवैभवं -

**अधिरुह्य ततः फणिराजफणान् ननृते भवता मृदुपादरुचा ।**

**कलशिञ्जित नूपुर मञ्जुमिलत् करकङ्कण संकुल संक्वणितम् ॥** (55.09)

इति वर्णयित्वा कवितारसास्वादकामानपि तोषयति अयं कविः। लोके नानाप्रकारैः वेदविहितकर्मानुष्ठान-परानपि अन्तरङ्गे दृढं समापतिताः वासनाः बाधन्ते पुनः पुनः । एतदर्थं भगवन्तं मनसि निधाय

समाचरितसेवाकर्माण्येव (निष्काम्यकर्म) पुनन्ति जीवं इतीदं सूक्ष्मं धर्मं अस्मभ्यं बोधयितुम् अजामिळोपाख्यानवर्णनसन्दर्भे -

**श्रुतिस्मृतिभ्यां विहिता व्रतादयः पुनन्ति पापं न लुनन्ति वासनाम् ।**

**अनन्तसेवा तु निकृन्तति द्वयीम् इति प्रभो त्वत्पुरुषा बभाषिरे ॥ (22.07)**

बहुकालम् अन्तरङ्गे स्थित्वा ईश्वरविषयकज्ञानप्राप्तिविषये बाधकतया स्थितस्य वासनारूपकप्रतिबन्धकस्य आमूलं नाशः केवलम् अस्माभिः कर्मफले अनासक्तिं प्रदर्श्य लोकक्षेमार्थं आश्रितैः भगवद्विषयकसेवाभिरेव साध्यः, पुनश्च पापमपि नाशयति इति द्विविधफलप्रदा भगवद्विषयकी लोकसेवा इति कर्मरहस्यमपि गुरूपदेशमिव स्वस्य स्तोत्रे संप्रदर्श्य सन्मार्गदर्शनं करोति श्रीमन्नारायणभट्टत्रिः ।

कुचेलः तावत् सख्यभक्त्या भगवन्तमवाप इति सर्वैः श्रुतमेव । भगवतः दर्शनानन्तरं तेन किमपि प्रष्टुं न शक्यमासीत् लौकिकविषये । परं गृहं प्रत्यागतः भगवता अनुगृहीतं सर्वं दृष्ट्वाऽपि तन्मध्ये स्थित्वाऽपि जीवितान्तं भगवद्भक्तिमेव सः भक्तशिरोमणिः प्रधानं मन्वानः तेभ्यः सुख-सौख्येभ्यः तटस्थभावनया विरक्तस्सन्नेव जीवन् अन्ते भगवन्तमाप इतीदं चरित्रं

**स रत्नशालासु वसन्नपि स्वयं समुन्नमद्भक्तिभरोऽमृतं ययौ ।**

**त्वमेवमापूरितभक्तवाञ्छितो मरुत्पुराधीश हरस्व मे गदान् ॥ (87.10)**

कुचेलमहिमवर्णनसन्दर्भे संप्रकट्य दृढवैराग्यस्य बलात् कीदृशं फलमाप्तुं शक्नोति भक्तः इति महान्तमुपदेशं अनेन प्रसङ्गेन नः स्मारयति । एवमेव अम्बरीषोपाख्यानसन्दर्भे सर्वविधसम्पत्तियुतोऽपि श्रीकृष्णभक्तिः, तदीयभागवताश्रयणं इत्युभयमेव सर्वोत्तमत्वेन अमन्यत यदन्ते दुर्वासःकोपात् तं सुरक्षितमिति विषयं –

**सप्तार्णवावृतमहीदयितोऽपि रेमे त्वत्सङ्गिषु त्वयि च मग्नमनास्सदैव ॥** (33.01)

लौकिकवासनापूरितहृदयः सामान्यः भक्तिहीनोऽपि स्वजीवने एतादृशानां महापुरुषाणां कथाश्रवणेन, श्रुतात् अथवा ज्ञाताच्च यत्किञ्चिदाचरणेन, सेवया च आत्मनः अन्तरङ्गे निश्चयेन भगवदनुग्रहेण

**योगीन्द्राणां त्वदङ्गेष्वधिकसुमधुरं मुक्तिभाजां निवासः**

**भक्तानां कामवर्षं द्युतरु किसलयं नाथ ते पादमूलम् ।**

**नित्यं चित्तस्थितं मे पवनपुरपते कृष्णकारुण्यसिन्धो**

**हृत्वा निश्शेषतापान् प्रदिशतु परमानन्दसन्दोहलक्ष्मीम् ॥** (100-10)

श्रीनारायणभट्टत्रिणा स्तोत्रस्य अन्तिमदशके प्रोक्तदिशा ऐहिकं तथा आमुष्मिकम् इत्युभयमपि वयं संप्राप्य पूर्वाणां चलितपथि गत्वा अन्ते भगवन्तं पवनपुरवासिनं श्रीकृष्णमेव शरणं याम इति समर्प्यते अयं लेखः भगवतः गुरुवातपुरीशस्य चरणकमलयोः ।

# श्रीमन्नारायणीये भक्तिरसः

**Dr. S.S. Mukundan**

Asistant professor .

Department of visishtadvaitha vedantha

Sri Ahobhila Mutt Adarsh Sanskrit Maha vidyalaya

Madurantakam

मोक्षप्राप्तेः उपायभूता सा भक्तिः इति। शास्त्राधिगत तत्त्वज्ञानपूर्वक स्वकर्मानुगृहीतभक्तिनिष्ठा साध्यानवधिकातिशय प्रियविशदतम प्रत्यक्षतापन्नानुध्यानरूपपराभक्तिरेव। भक्तिशब्दः प्रीतिविशेषः, प्रीतिश्च ज्ञानविशेष एव। **"प्रियो हि ज्ञानिनोऽत्यर्थम् अहं स च मम प्रियः"** इति उक्तत्वात् परभक्तिरूपापन्नमेव च इदं भगवत्प्राप्तिसाधनम्।

**"न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्।**

**भक्त्या च धृत्या च समाहितात्मा ज्ञानस्वरूपं परिपश्यतीह"** । इति श्रुतिः

ऐकान्तिक, आत्यन्तिक, भक्तियोगेन नारायणः लभ्यः। ज्ञानयोगकर्मयोगाभ्याम् अन्तःकरणं संस्कृतं चेत्, भक्तिः साध्या। वर्णाश्रमधर्मनिर्वहणं कर्मयोगः। आत्म-अनात्मविवेकः परमात्मस्वरूपावगाहनं च ज्ञानयोगः। परमपुरुषम् अनन्तकल्याणगुणिनं नारायणं ज्ञात्वा, इतरानासक्त्या, अनवरतनिरतिशयध्यानं भक्तिः। अनेन ध्यानेन विशदतमप्रत्यक्षत्वं प्राप्तं चेत् भक्तिः समुत्पद्यते। अत्र ध्यानविषयवस्तु नारायणः भक्त्या प्रत्यक्षी भवति। निरतिशयप्रियवैतृष्ण्यावहानन्यप्रयोजनस्वेतरज्ञानविशेषः भक्तिः। तादृश भक्तिविशिष्टं भगवान् अनुगृह्णाति अनादिकर्मसंबन्धेन बहुजन्मधारणानन्तरं भक्त्या भगवन्तमाश्रित्य, आराध्य, भगवदनुग्रहेण शरीरसंबन्धं विहाय भगवत्सायुज्यप्राप्तिरेव मोक्षः।

ज्ञानविशेषाभ्यां भक्तिप्रपत्तिभ्यां प्रसन्नः भगवान् मोक्षं ददाति। कर्मज्ञानयोगौ भक्तिद्वारैव मोक्षसाधने स्याताम्। भक्तियोगः परमपुरुषप्राप्त्युपायः। तदशक्तानां तत्सिद्ध्यर्थं आत्मावलोकनं प्रथममुपेयत्वात् प्रथमं दुष्करम्। तस्मात् तदशक्तस्य प्रथमं कर्मयोगाचरणम् आवश्यकम्। ज्ञानयोगशक्तस्यापि लोकसंग्रहार्थं कर्मयोगाचरणमावश्यकम्। कर्मयोग एव ज्ञानयोगस्य शक्तिं प्रसादयिष्यति। आचार्योपदेशात् जीवपरमात्मनोः याथात्म्यं ज्ञात्वा, शक्त्यनुसारेण फले अनासक्त्या नित्यनैमित्तिककाम्यकर्माचरणमेव कर्मयोगः। देवतार्चना, तपः, तीर्थयात्रा, दान, यज्ञादिभेदैः, बहुविधः

कर्मयोगः। कर्मयोगात् जीवगतकल्मष अपनयनद्वारा ज्ञानयोगमुत्पाद्य तद्वारा वा साक्षाद्वा भक्त्युत्पादको भवति। ज्ञानयोगो नाम निर्मलान्तःकरणेन भगवच्छेषभूतः **'अहम्'** इत्यनेन ज्ञानेन प्रकृतिवियुक्तस्वात्मचिन्तनमेव। तत्साक्षाद्भक्त्युपयोगः। तस्मात् कर्मज्ञानयोगौ भक्तिद्वारैव उपयुक्तौ। साक्षात्साधनत्वं तयोः नास्ति।

भक्तियोगो नाम यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिरूपाष्टाङ्गयुक्ततैलधारावदविच्छिन्नस्मृतिसन्तानरूपः। अहिंसा, सत्यम्, अस्तेयम्, ब्रह्मचर्यम्, अपरिग्रहाश्च यमाः। शौचम्, संतोषः, तपः, स्वाध्यायः, ईश्वरप्रणिधानं च नियमाः। स्थिरसुखपद्मासनादीनि आसनानि। श्वासप्रश्वासबन्धनं प्राणायामः। इन्द्रियनिग्रहः प्रत्याहारः। ध्येये स्थिरचित्तवर्णनम् ध्यानम्। ध्येये चित्तैकाग्रता समाधिः।

भक्तिः नाम का इति चेत् - **'भज'** धातोः क्तिन्प्रत्यये भक्तिशब्दः समुत्पद्यते। भज धातोः सेवा, भजनम्, अर्पणम्, प्रेमा, इत्यादयः अर्थाः वर्तन्ते। भक्तिसूत्रकाराः नारदाचार्याः – "सा तस्मिन् परमप्रेमरूपा अमृतस्वरूपा च यल्लब्ध्वा पुमान् सिद्धो भवति। अमृतो भवति तृप्तो भवति, यत्प्राप्य न किञ्चिद्वाञ्छति, न शोचति, न द्वेष्टि, न रमते, नोत्साही भवति, यत् ज्ञात्वा मत्तो भवति, स्तब्धो भवति, आत्मारामो भवति, सा न कामयमाना, निरोधरूपत्वात्" इत्यवोचन्। एवं च पुरुषोत्तमे भगवति विद्यमान निर्हेतुक, निष्काम, निरन्तरप्रेमा एव भक्तिः।

अत एवोक्तम् -

**"दर्शनं परभक्तिः स्यात् परज्ञानं तु सङ्गमः। पुनर्विश्लेषभीरुत्वं परमा भक्तिरुच्यते।**

**अनन्यममता विष्णौ ममता प्रेमसङ्गता। भक्तिरित्युच्यते भीष्मप्रह्लादोद्धवनारदैः॥**

**सर्वोपाधिविनिर्मुक्तं यत्परत्वेन निर्मलम्। हृषीकेण हृषीकेश सेवनं भक्तिरुच्यते"।**

'प्रेमा' नाम सर्वत्र रम्यावलोकनम्। 'भक्तिः' नाम सर्वत्र ब्रह्मावलोकनम्। मानवमनःप्रवृत्तीनाम् इन्द्रियविकाराणां भावधारणां परमगम्ये भगवति उद्दीपनं कृत्वा, दिव्यीकरणं कृत्वा, परमात्मैक्यसुखस्य नित्यानन्दस्य सहजरीत्या सिद्धीकरणमेव भक्तियोगविशिष्टता। साधनदशायां विद्यमान ईश्वरप्रेमा अपरा भक्तिः। सिद्धावस्थायां विद्यमान ईश्वरप्रेमा पराभक्तिः।

रामायणे - "अधिकतमानन्याविषयः स्नेहः भक्तिः" "उत्कृष्टे प्रीतिः भक्तिः" इति। भावप्रकाशिकायाम्- "उपकारकत्वकृतः स्नेहविशेषः भक्तिः", भूयसी सेवा भक्तिशब्दवाच्या इत्यभियुक्ताः भक्ताः इति। निक्षेपरक्षायाम् - "पूजनम् भक्तिः" इति। शरणागतिभाष्ये - "प्रीतिरूपमनुध्यानम्" भक्तिः। तात्पर्यचन्द्रिकायाम् - "स्नेहपूर्वमनुध्यानम् भक्तिः", "प्रीतिरूपापन्नध्यानं भक्तिः", "अतिशयितप्रीतिः परमभक्तिः" इति। दयाशतके - "महनीयविषयकः स्नेहः भक्तिः" इति। सर्वार्थसिद्धौ - "महनीयविषये

स्नेहः भक्तिः" इति। महाभारते - "प्रेमपूर्वानुख्यानम् भक्तिः" इति। वादावल्याम् - "प्रीतिरूपतापन्नदर्शन-समानाकारध्रुवानुस्मृतिरूपध्यानम् भक्तिः" इति। न्यायसिद्धाञ्जने - "प्रीतिविशेषः भक्तिः" इति। यतीन्द्रमतदीपिकायाम् - "निखिलहेयप्रत्यनीकम् समस्तकल्याणगुणात्मकम् ब्रह्मावधार्य तत्प्राप्त्युपायभूतं भक्तिं स्वीकृत्य तया मोक्षं प्राप्तुकामः भक्तः" इति।

भगवत्प्राप्त्युपायभूता भक्तिः भगवदुपासनम्। केवलानुभूतियोग एव भक्तिः, तदनुभूतिश्च अलौकिकानुभूतिः, न तु लौकिकानुभूतिः। भक्तेः साधारणप्रेम्णः अत्यन्ततारतम्यं वर्तते। एतद्रूपा भक्तिः इत्यूहितं बुद्धिशक्तेः नालम्। भक्तिस्वरूपम् विशदीकर्तुं भाषाशक्तिः नालम्। भक्तिः आत्मानन्दस्य न भेदः। आत्मानन्दः यथा अतीन्द्रियगोचरः, तथैव भक्तिरसानन्दोपि। भक्तिः न तु प्रेमरूपा। अपि तु परमप्रेमरूपा। तस्मादेव परमात्मा भक्त्यैकलभ्यः। श्रीमद्भागवते व्यासेन भक्तेः नवविधत्वं वर्णितम् -

**"श्रवणं कीर्तनम् विष्णोः स्मरणम् पादसेवनम्।**

**अर्चनं वन्दनं दास्यं सख्यं आत्मनिवेदनम्॥**

**इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा"**॥ इति॥

इत्येवं क्रमेण मोक्षसाधनस्य भक्तेः वैशिष्ट्यं भक्त्यैकलभ्यः भगवान्, भक्तिरेव गरीयसीति स्फष्टीकृतम् श्रीमन्नारायणीये एकनवतितमे दशके।

तत्र प्रथमेन श्लोकेन मरणादि सर्वविधभयनिवृत्ति साधनम् भक्तिरेवेति सूच्यते -

**"श्रीकृष्ण त्वत्पदोपासनमभयतमं बद्धमिथ्यार्थदृष्टेः**

**मर्त्यस्यार्तस्य मन्ये व्यपसरति भयं येन सर्वात्मनैव।**

**यत्तावत् त्वत्प्रणीतानिह भजनविधीनास्थितो मोहमार्गे**

**धावन्नप्यावृताक्षः स्खलति न कुहचिद् देवदेवाखिलात्मन्"**॥ 1॥

अर्थात् रज्जुसर्पादिषु इव वस्तुतः अयथार्थभूतेषु देहपुत्रकलत्रमित्रादिषु स्थिरीकृतबुद्धेः। अत एव दुःखितस्य नरस्य भगवच्चरणारविन्दसेवनम् एव अतिशयेन भयनिवर्तकं भवति। तेनैव सर्वात्मना भयं विनश्यति। ये च जना भगवता उपदिष्टान् धर्मान् यथावत् आश्रिताः सन्तः कामिन्यादौ इष्टसाधनत्वभ्रमविषये आस्थायुक्ताः चिन्तारहिताः सन्तः कालं यापयन्ति, तेऽपि क्वापि भ्रष्टाः न भवन्ति इत्यर्थः॥

द्वितीयेन श्लोकेन भक्तस्य जातिदोषो नास्ति इति सूच्यते-

**"भूमन् कायेन वाचा मुहुरपि मनसा त्वद्बलप्रेरितात्मा**

**यद्यत् कुर्वे समस्तं तदिह परतरे त्वय्यसावर्पयामि।**

**जात्यापीह श्वापकस्त्वयि निहितमनःकर्मवागिन्द्रियार्थ-**

**प्राणो विश्वं पुनीते न तु विमुखमनाः त्वत्पदाद् विप्रवर्यः" ॥ 2॥**

अर्थात् भगवति परमेश्वरे विष्णौ समस्तमपि समर्पितवान् नरः जात्या चण्डालः अपि विश्वं पवित्रं करोति। यस्तु भगवच्चरणारविन्दसेवने पराङ्मुखो नरः श्रुतिस्मृतिविहितकर्मणाम् अनुष्ठाता ब्राह्मणश्रेष्ठः अपि विश्वं पवित्रं कर्तुं समर्थो न भवति तदर्थः।

तृतीयेन श्लोकेन भयस्य कारणं वस्त्वन्तरादेव भवति। अर्थात् द्वितीयवस्तुनः एवेति सूच्यते -

**"भीतिर्नाम द्वितीयाद् भवति ननु मनःकल्पितं च द्वितीयम्**

**तेनैक्याभ्यासशीलो हृदयमिह यथाशक्ति बुद्ध्या निरुन्ध्याम्।**

**मायाविद्धे तु तस्मिन् पुनरपि न तथा भाति मायाधिनाथम्**

**तत् त्वां भक्त्या महत्या सततमनुभजन्नीश भीतिं विजह्याम्" ॥ 3॥**

अर्थात् भयं नाम द्वितीयस्मात् वस्तुनः भवति। तच्च वस्तुतः नास्त्येव, किन्तु मनःकल्पितम्। अतः तन्निवृत्तये सर्वं ब्रह्म इति ऐक्याभ्यासः कारणम्। तच्च अविद्याकार्यभूता रागद्वेषादयः प्रतिबध्नन्ति। अतः मायारूपाया अविद्याया निवृत्तये मायाधिनाथं भगवन्तं श्रीकृष्णम् अहं प्रार्थये इत्यर्थः।

ततः चतुर्थश्लोकेन भक्तिः कथं जायते, कथं वर्धते इति चेत् सत्सङ्गादेव इति सूच्यते-

**भक्तेरुत्पत्तिवृद्धी तव चरणजुषां सङ्गमेनैव पुंसाम्**

**आसाद्ये पुण्यभाजां श्रिय इव जगति श्रीमतां सङ्गमेव।**

**तत्सङ्गो देव भूयान्मम खलु सततं तन्मुखादुन्मिषद्भिः**

**त्वन्माहात्म्यप्रकारैः भवति च सुदृढा भक्तिरुद्धूतपापा॥ 4॥**

अर्थात् श्रीमतां सङ्गमेनैव श्रिय उत्पत्तिश्च वृद्धिश्च यथा संभवति, तद्वत् भगवति परमप्रेमरूपा भक्तिः अपि भगवतः पादारविन्दं सदा सेवमानानां सङ्गमेनैव सुकृतशालिनां पुंसां समुत्पन्ना अभिवृद्धा च सञ्जायते। अतः भगवतो भक्तैः सह सङ्गमः, तथा तेन च भक्तिः सुदृढा भूयात् इति प्रार्थ्यते इत्यर्थः॥

पञ्चमश्लोकेन, पूर्वोक्तरीत्या भक्तिप्रपत्तिभ्यां प्रसन्नः ईश्वरः मोक्षं ददाति। अतः मोक्षसाधनेषु भक्तेः प्रामुख्यं भवति। तादृशी भक्तिः मह्यं प्रसादय इति प्रार्थ्यते -

**श्रेयोमार्गेषु भक्तावधिकबहुमतिः जन्मकर्माणि भूयो**

**गायन् क्षेमाणि नामान्यपि तदुभयतः प्रद्रुतं प्रद्रुतात्मा।**

**उद्यद्धासः कदाचित् कुहचिदपि रुदन् क्वापि गर्जन् प्रगाय-**

**न्नुन्मादीव प्रनृत्यन्नपि कुरु करुणां लोकबाह्यश्चरेयम्॥ 5॥**

षष्ठश्लोकेन, यः साध्यभक्तिलभ्या तस्य स्थितिः सूच्यते -

**भूतान्येतानि भूतात्मकमपि सकलं पक्षिमत्स्यान् मृगादीन्**

**मर्त्यान् मित्राणि शत्रूणि यमितमतिस्त्वन्मयान्यानमानि।**

**त्वत्सेवायां हि सिध्येन्मम तव कृपया भक्तिदार्ढ्यं विरागः**

**त्वत्तत्त्वस्यावबोधोपि च भुवनपते यत्नभेदं विनैव॥ 6॥**

अर्थात् सर्वोपि अयं चराचरात्मकः प्रपञ्चः भगवन्मय इति निश्चितमतिः अहं भगवते प्रणतिं करवाणि। सर्वकर्मणां भगवति विष्णौ समर्पणम्, तथा भगवज्जन्मकर्मणां सदा अनुकीर्तनम्, एवं सर्वचराचरेषु भगवान् इति बुद्ध्या प्रणामः इत्येवं एतस्मिन् सर्वस्मिन् सति भगवतः दयया यत्नभेदं विनैव भगवति परमप्रेमरूपाया भक्तेः दार्ढ्यम्, तथा इह अमुत्र अर्थफलभोगविरक्तिः, एवं भगवत्तत्त्वस्य साक्षात्कारश्च मम भूयात् इति प्रार्थ्यते इत्यर्थः॥

सप्तमेन श्लोकेन, भगवतः कृपाकटाक्षेण भक्तिः, वैराग्यम्, ज्ञानम् इत्यादीनाम् आधिक्यम् यः प्राप्तवान् तस्य स्थितिः सूच्यते -

**नो मुह्यन् क्षुत्तृडाद्यैः भवसरणिभवैः त्वन्निलीनाशयत्वात्**

**चिन्तासातत्यशाली निमिषलवमपि त्वत्पदादप्रकम्पः।**

**इष्टानिष्टेषु तुष्टिव्यसनविरहितो मायिकत्वावबोधात्**

**ज्योत्स्नाभिस्त्वन्नखेन्दोः अधिकशिशिरितेनात्मना सञ्चरेयम्॥ 7॥**

अष्टमेन श्लोकेन तावत् - भक्तः, उत्तम, मध्यम प्राकृतभेदात् अवस्थात्रयवान्। तादृश अवस्थात्रयं प्रार्थ्यते -

**भूतेष्वेषु त्वदैक्यस्मृतिसमधगतौ नाधिकारोधुना चेत्**

**त्वत्प्रेम त्वत्कमैत्री जडमतिषु कृपा द्विट्सु भूयादुपेक्षा।**

**अर्चायां वा समर्चाकुतकमुरुतरश्रद्धया वर्धतां मे**

**त्वत्संसेवी तथापि द्रुतमुपलभते भक्तलोकोत्तमत्वम्॥ 8॥**

नवमश्लोकेन, मायायाः निवृत्तेः कारणम् भक्तिरेव इति उच्यते -

**आवृत्य त्वत्स्वरूपं क्षितिजलमरुदाद्यात्मना विक्षिपन्ति**

**जीवान् भूयिष्ठकर्मावलिविवशगतीन्दुःखजाले क्षिपन्ती।**

**त्वन्माया माभिभून्मामयि भुवनपते कल्पते तत्प्रशान्त्यै**

**त्वत्पादे भक्तिरेवेत्यवददयि विभो सिद्धयोगी प्रबुद्धः॥9॥**

अर्थात् त्रिगुणात्मकं सदसद्भ्यां अनिरवचनीयम् अनादि भावरूपाभ्याम् अज्ञानरूपं भगवतः विष्णोः मायैव भगवतः सच्चिदानन्दस्वरूपं ब्रह्म आवरणशक्त्या आच्छादयति, विक्षेपशक्त्या पृथिव्यप्तेजोवाय्वाकाशरूपेण आविर्भावयति। किञ्च स्वस्य बहुविधानां सदसत्कर्मणां समूहेन जीवान्

दुःखसमूहे पातयति च। भगवतो विष्णोः चरणारविन्दे परममप्रेमरूपा भक्तिः एव भगवतः विष्णोः मायाया अभिभवाय समर्था इत्यर्थः ।

दशमश्लोकेन, सदाचार्याश्रयणेन किं प्रयोजनम् इति उच्यते -

**दुःखान्यालोक्य जन्तुष्वलमुदितविवेकोहमाचार्यवर्यात्**
**लब्ध्वा त्वद्रूपवत्वं गुणचरितकथाद्युद्भवद्भक्ति भूमा।**
**मायामेनां तरित्वा परमसुखमये त्वत्पदे मोदिताहे**
**तस्यायं पूर्वरङ्गः पवनपुरपते नाशयाशेषरोगान्॥ 10॥**

अर्थात् सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः इति सर्वः अपि जन यद्यपि सुखम् उद्दिश्य एव प्रवर्तते, तथापि पुत्रकलत्रवित्तादिभ्यो बहुधानि दुःखानि अनुभूय कर्मणा सञ्चितम् ऐहिकम् आमुष्मिकं च सर्वम् अपि नश्वरम्, दुःखसाधनं च भवति इति सञ्जाततत्त्वावबोधः सन् उत्तमगुरोः उपदेशेन भगवतः विष्णोः तत्त्वम् अधिगम्य भगवतः भक्तवात्सल्यादीनां कथाभिः प्रवृद्धभक्त्या मायाम् अभिभूय निरतिशयानन्दरूपे भगवति ब्रह्मणि मुदितः सन् वर्तिष्यति इत्यर्थः ॥

इत्येवं क्रमेण श्रीमन्नारायणीये भक्तिरसमधिकृत्य प्रपञ्चितं भवति॥

*****

# नारायणीयप्रतिपादितं श्रीकृष्णपारम्यम्

**Dr. V. Balaji**
Assistant Professor
Department of Sanskrit
Dwaraka Doss Goverdhan Doss Vaishnav College
Arumbakkam, Chennai – 106.
Ph : 9791699411
Email id : balbalram1990@gmail.com

असारेऽस्मिन् संसारे दुःखदावाग्निदग्धस्य आधिव्याधिप्रपीडितस्य पापादिविषण्णस्य मायामोहभ्रान्तचेतसो मानववृन्दस्य मनःसन्तापनिवारणाय चेतःप्रसादाय सुखावाप्तये च विद्वद्धौरेयाः तत्वज्ञाः काव्यशास्त्रनामकं रत्नं वाङ्मयमहोदधेः सारभूतम् उददीधरन् । तदुक्तं महर्षिप्रवरेण कपिलमुनिना–

**भावानुभूतिमद्वाक्यं रसवत् ध्वनिसङ्गतम् ।**
**गुणालङ्कारसञ्जुष्टं काव्यं रम्यार्थद्योतकम् ॥**[1]

इति । एवं तथाभूतस्य काव्यस्य सर्वप्रथमं लक्षणमित्थमुक्तम् अग्निपुराणे –

**संक्षेपाद् वाक्यमिष्टार्थव्यवच्छिन्ना पदावली ।**
**काव्यं स्फुरदलंकारं गुणवद् दोषवर्जितम् ॥**[2]

इति । एवं शब्दार्थशरीरं काव्यमिति सर्वसम्मतलक्षणमप्यस्ति साहित्यवाङ्मये । तथाभूतस्य काव्यस्य विशेषलक्षणं मम्मटाचार्यैः स्वीये काव्यप्रकाशे इत्थं सन्निगद्यते –**"तददोषौ सगुणौ शब्दार्थावनलङ्कृती पुनः क्वापि"**[3] इति । तथाभूतस्य सहृदयमनःप्रीतिदायकस्य काव्यस्य उत्तम-मध्यम-अधमभेदेन विभागः कृतः,यस्मिन् काव्ये व्यङ्ग्यार्थस्य प्राधान्यं दृश्यते तत्काव्यं उत्तमं ध्वनिकाव्यमिति, यत्र वाच्यव्यङ्ग्ययोः समप्राधान्यमुत व्यङ्ग्याद्वाच्यस्य प्राधान्यं दृश्यते तद्गुणीभूतव्यङ्ग्यं मध्यममिति, यत्र व्यङ्ग्यार्थ एव नास्ति तदधममिति ध्वनिकारानुयायिभिः आलङ्कारैः विशेषविभागः कृतः ।

---

[1] संस्कृतनिबन्धशतकम् –पृष्ठसंख्या 57 –.

[2] अग्निपुराणम् 337

[3] काव्यप्रकाशः 1.4

अपि च काव्यस्य सामान्यतया दृश्यं श्रव्यमिति द्विप्रकारतया विभागः कृतः। श्रव्यं हि महाकाव्यं, खण्डकाव्यमिति विभागद्वयोपेतं विद्योतते। तयोर्मध्ये खण्डकाव्यं श्रृङ्गार-नीति-भक्तिनाम्ना त्रेधा संविभक्तं वर्तते। तेषु भक्तिविभागे स्तोत्रकाव्यानामुपस्थितिः दरीदृश्यते। तत्र मेल्पुत्तूर् नारायणभट्टपादैः विरचितं नारायणीयाख्यं श्रीमन्नारायणस्तोत्रपरं महत्काव्यं चकास्ति। तत्र श्रीकृष्णस्य परमात्मत्वप्रकटनपरान् केचन पद्यविशेषानधिकृत्य स्थालीपुलाकन्यायेन किञ्चिदत्र विस्तार्यते।

स्तोत्रग्रन्थस्यास्य दशमस्कन्धस्य अष्टाशीतितमदशकस्यान्तिमं पद्यमित्थं वर्तते –

**सोऽयं कृष्णावतारो जयति तव विभो यत्र सौहार्दभीति-**
**स्नेहद्वेषानुरागप्रभृतिभिरतुलैरश्रमैर्योगभेदैः ।**
**आर्तिं तीर्त्वा समस्ताममृतपदमगुः सर्वतः सर्वलोकाः**
**स त्वं विश्वार्तिशान्त्यै पवनपुरपते भक्तिपूर्त्यै च भूयाः ॥**[1]

अयं कृष्णावतार अत्यन्तमुत्कृष्टतमः विद्योतते, यतो हि – यत्र सर्वे जनाः सौहार्द-भीति-स्नेह-द्वेष-अनुरागप्रभृतिभिः नितरामश्रमदायकैः श्रीकृष्णे मनोनिवेशनोपायविशेषात्मकैः योगभेदैः, अर्थात् सौहार्दात् पाण्डवादयः, भीत्या कंसः, स्नेहात् यादवः, द्वेषात् शिशुपालादयः, अनुरागात् गोप्यः इति सर्वत्र सर्वे लोकाः समस्तामाध्यात्मिकादि दुःखत्रयसञ्जातपीडामतिक्रम्य मोक्षं जग्मुः, तस्मात् सकलपीडापहत्यै प्रारब्धायाः भक्तेः प्रवृद्धये च भूयाः इत्यर्थः। तत्र सर्वेषां प्रपन्नानां समस्तामार्तिं छित्त्वा अमृतपदाख्यं मोक्षं सन्ददाति इति सः प्रपन्नार्तिच्छिद्, प्रणतार्तिहर इत्यादि नामभिः संस्तूयते। एवमस्ति च वचनमस्मत्सिद्धान्ते स्वप्राप्तौ स्वयमेवोपायः इति, एवं श्रुतावपीत्थमुक्तं – **यमेवैष वृणुते तेन लभ्यः**[2] इति, अतः यमेवैष वृणुत, अर्थात् मोक्षं सन्दातुमिच्छति, तेभ्यः सुलभोपायभूतान् सौहार्दादि श्रीकृष्णाख्यपरमात्मचिन्तनोपाययोगभेदान् प्रदर्श्य, तदनुष्ठाने सन्नियुज्य आर्तिं च विच्छिद्य अमृतपदं नियच्छति इत्यनेन मोक्षफलप्रदातृ सैव इति विशेषार्थः व्यज्यते।

एवं तत्रैव दशमस्कन्धे नवाशीतितमदशके पद्यविशेष इत्थं चकास्ति –

**रमाजाने जाने यदिह तव भक्तेषु विभवो**
**न संपद्यः सद्यस्तदिह मदकृत्वादशमिनाम् ।**
**प्रशान्तिं कृत्वैव प्रदिशसि ततः काममखिलम्**
**प्रशान्तेषु क्षिप्रं न खलु भवदीये च्युतिकथा ॥**[3]

---

[1] नारायणीयं 10.88.11

[2] मुण्डकोपनिषत् 3-2-3

[3] नारायणीयं 10.89.1

हे श्रियः पते! निस्सन्देहमहं जाने यत् – तव भक्तानां किञ्चित् भजनामत्रेण अभीष्टफलं न यच्छतीति। यतो हि - अशमिनाम् अर्थात् चाञ्चल्यमनस्कानां तेषां यद्यभीष्टफलानि सद्यः संप्रदीयते चेत्तर्हि नूनं तत् मदजनकाय भक्त्यनुष्ठानोपरोधाय एव स्यात्। अत एव कारणात् भगवद्भक्तानां तेषां चाञ्चल्यकारणात्मकान् दोषान् दूरीकृत्य,तस्मात् प्रशान्तचित्तानां तेषामखिलमभीष्टफलगुञ्जं अतिशीघ्रं नियच्छति, भगवदाश्रितानां च्युतिकथा न कुत्रापि श्रुतमिति कारणादेव भवान् अच्युत इत्यपि जोघुष्यते सर्वैः, अनेन स्वाश्रितानां भक्तानाम् ऐहिकामुष्मिकफलसन्दातृ सैव इति सुस्पष्टं विज्ञायते। तच्चोक्तं गीतायाम् – **लभते च ततः कामान् मयैव विहितान् हि तान्**[1] इति।

एवमत्तरत्र द्वादशतमस्कन्धे अष्टनवतितमे दशके इत्थं समुपवर्ण्यते –

**यस्मिन्नेतद्विभातं यत इदमभवत् येन चेदं य एतद्**
**योऽस्मादुत्तीर्णरूपः खलु सकलमिदं भासितं यस्य भासा ।**
**यो वाचां दूरदूरे पुनरपि मनसां यस्य देवाः मुनीन्द्राः**
**नो विद्युस्तत्वरूपं किमु पुनरपरे कृष्ण तस्मै नमस्ते ॥**[2]

इदमखिलं जगत् अभिन्ननिमित्तोपादानकारणभूताद्यस्मात्सञ्जातं, यस्मिन्नधिष्ठाने नितरां तिष्ठति, प्रलयकाले यस्मिन् संलीयते, यस्य रूपमप्राकृतं, यस्य भासा सर्वमिदं विभाति, यस्य स्वरूपः, स्वभावश्च वाचामगोचरभूतः, तस्मात् कारणात् तत्वं रूपं देवैः मुनीन्द्रैश्च सुलभतया वेदितुमशक्यः किमु सामान्यैः, तथाविशेषभूताय पुरुषोत्तमाय सच्चिदानन्दरूपाय ते नमो नम इति पद्यार्थः। तत्र श्लोकस्थ प्रथमपादेन परब्रह्मलक्षणं जगत्कारणं संसूच्यते, आह च भृगुवल्यां – यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्तीति तद्विजिज्ञासस्व तद्ब्रह्मेति[3] इति । एवं योऽस्मादुत्तीर्णरूपः इति पदप्रयोगेण अस्माद् कर्मवासनाप्रपीडितात् जगतः व्यतिरिक्तस्वरूपः अर्थात् अप्राकृतदिव्यमङ्गलविग्रहभाक्, तस्मात् जगदात्मत्वेऽपि तस्य तद्गतदोषाः न स्पृहेयु इत्यर्थः ध्वन्यते।

एवमेव ह्युत्तरत्र –

**यद्भीत्योदेति सूर्यः दहति च दहनो वाति वायुस्तथान्ये**
**यद्भीताः पद्मजाद्याः पुनरुचितबलीनाहरन्तेऽनुवेलाम् ।**
**येनैवारोपिताः प्राङ्निजपदमपि ते च्यावितारश्च पश्चात्**

---

[1] भगवदगीता 7.22

[2] नारायणीयं 12.98.1

[3] तै.उ.भृगुवल्ली 1.1.1

**तस्मै विश्वं नियन्त्रे वयमपि भवते कृष्ण ! कुर्मः प्रणामम् ॥**[1]

यस्माद्भीत्या रविः समुदेति, अग्निश्च दहति, वायुश्च वाति तच्चोक्तमुपनिषदि – भीषास्माद्वातः पवते भीषोदेति सूर्यः भीषादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः[2] इति। एवं ये चतुर्चमुखादयः सत्यलोकादि निजपदेषु येन पूर्वं समारोपिताः, द्विपरार्धावसाने येन च्युतिं प्रापिताश्च भविष्यन्ति। तथाभूताय ब्रह्मादीनामपि नियामकाय सर्वेश्वराय कृष्णाय मत्प्रणामततीः परिसमर्पयेम इत्यर्थः। पद्येनानेन भगवतो कृष्णस्य परमात्मलक्षणभूतं सर्वनियामकत्वाख्यं गुणविशेषं संसूच्यते।

एवं तत्रैव –

**त्रैलोक्यं भावयन्तं त्रिगुणमयमिदं त्र्यक्षरस्यैकवाच्यम्**

**त्रीशानामैक्यरूपं त्रिभिरपि निगमैर्गीयमानस्वरूपम् ।**

**तिस्रोऽवस्था विदन्तं त्रियुगजनिजुषं त्रिक्रमक्रान्तविश्वम्**

**त्रैकाल्ये भेदहीनं त्रिभिरहमनिशं योगभेदैर्भजे त्वाम् ॥**[3]

इदं त्रिगुणमयं सत्वरजस्तमस्तारतम्येन विलक्षणं त्रैलोक्यं सृजन्तं, त्र्यक्षराख्यस्य प्रणवस्य प्रधानमभिधेयं, त्रिमूर्तीनामैक्यस्वरूपम्, आह च वचनविशेषः ब्रह्मा विष्णुश्च रुद्रश्च परस्यैव विभूतयः इति,वेदत्रयैः प्रतिपाद्यमानं स्वरूपं, जाग्रत्स्वप्नसुषुप्त्यादि अवस्थात्रयसाक्षिनं, त्रियुगजनिजुषं – कृतयुगे प्रजानां कृतकृत्यतयावतारप्रयोजनाभावादितरेषु त्रिषु त्रेताद्वापरकलियुगेषु अवतारं जुषन्तं, त्रिभिर्पदविक्षेपैः क्रान्तविश्वं, भूतभविष्यद्वर्तमानेषु कालेष्वद्वितीयम् उत जायतेत्यादि षट्भावविकारहीनं, एवम्भूतं त्वाम् अहमनिशं कर्मज्ञानभक्तियोगैः भजे इति पद्यार्थः। तत्र तिस्रोऽवस्था विदन्तम् इति पदप्रयोगेण अवस्थात्रयाधिष्ठातृत्वं भगवति व्यज्यते, विशिष्य स्वप्नावस्थायां जीवेनानुभूयमानं सर्वं परमात्मना सृष्टं सर्वांशस्याप्याश्चर्यत्वादिति सन्ध्याधिकरणे - न तत्र रथाः रथयोगाः पन्थानो भवन्ति......स हि कर्ता[4] इति बृहदारण्यकरश्रुत्या निर्णीतविषय अत्र व्यज्यते। एवं त्रैकाल्ये भेदहीनम् इति प्रयोगेण परस्य सत्यं ज्ञानमनन्तं ब्रह्म [5] इति ब्रह्मलक्षणप्रतिपादकश्रुतिवाक्यस्थानन्तपदेन देशतः कालतः वस्तुतश्चापरिच्छेद्यत्वं ध्वन्यते। तथाभूतं परमात्मलक्षणोपेतं त्वामहमनिशं भजे इत्यर्थः।

अपि च – **सत्यं शुद्धं विबुद्धं जयति तव वपुर्नित्यमुक्तं निरीहम्**

**निर्द्वन्द्वं निर्विकारं निखिलगुणगणव्यञ्जनाधारभूतम् ।**

---

[1] नारायणीयं 12.98.8

[2] तै. उ. 2.8.1

[3] नारायणीयं 12.98.9

[4] बृ.उ 4.3.10

[5] तै.उ.2.1.1

**निर्मूलं निर्मलं तन्निरवधिमहिमोल्लासि निर्लीनमन्त-**
**निस्सङ्गानां मुनीनां निरुपमपरमानन्दसान्द्रप्रकाशम् ॥**[1]

हे कृष्ण ! तवेदं स्वरूपम् आविर्भूतनिरतिशयोत्कर्षं प्रकाशते। तत्कथमिति सत्यादि विशेषणपदैः दृढीक्रियते। सत्यं – परमार्थसत्यं तव स्वरूपम्, विबुद्धमिति पदप्रयोगेण तस्य स्वयंप्रकाशत्वं, नित्यमुक्तमित्यनेन बन्धमोक्षाद्यवस्थाभावत्वं, निरीहमिति प्रयोगेण कर्मफलभोक्तृत्वाद्यभाववत्वं, निर्द्वन्द्वमित्यनेन तत्सदृशपुरुषान्तराभावत्वम् अनेन सदेव सोम्य इदमग्र आसीदेकमेवाद्वितीयम्[2] इति श्रुतिवाक्योक्तम् स्वरूपतो स्वभावतश्चाद्वितीयत्वं संसूच्यते, निर्विकारमित्यनेन परिणामादिविकाराभावत्वं, निखिलानां गुणगणानां आधारभूतं, तच्चोक्तं विष्णुपुराणे - समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशोद्धृतभूतसर्गः। तेजो बलैश्वर्यमहाविभूतिः सुवीर्यशक्त्यादि गुणैकराशिः।[3] परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे॥[4] इति। एवं निर्मूलमित्यनेन तस्य निष्कारणत्वमुच्यते, अनेन तस्य सर्वस्मात्परत्वं संसूच्यते। निर्मलमित्यनेन हेयगुणरहितत्वं, तदप्युक्तं विष्णुपुराणे – समस्तहेयरहितं विष्ण्वाख्यं परमं पदम्।[5] इति। एवं निरवधिमहिमोल्लासीत्यनेन कालदेशाद्यपरिच्छिन्नवैभवयुतं, निस्सङ्गाणां मनीनां हृदये प्रकाशमानम्, असंख्येयानन्दभूयिष्ठं तव स्वरूपं, स्वभावश्च विद्योतते। तथाभूताय कृष्णाय नमो नम इति पद्यार्थः।

एवम्भूताः पवनपुरपतिगुणगणप्रतिपादकपराः, तस्य परमात्मत्वलक्षणद्योतकाः बहवो पद्यविशेषाः ग्रन्थेऽस्मिन् संविराजन्ते। तेषु स्थालीपुलाकन्यायेन यथामति क्रोडीकृत्य पत्रेऽस्मिन् प्रतिपादितं वर्तते। एवम्भूताः बहवः स्तोत्रग्रन्थाः संस्कृतसाहित्ये देदीप्यमानाः संविराजन्ते, तेषां परमं प्रयोजनं संसारदावाग्निदग्धानां जीवानां भक्तिमार्गप्रवर्तनं, तदनुष्ठातृणां संसारनिवृतित्वमेव, अतः वयमपि तदा समनुष्ठीय संसाराद्विमुक्तये यतेमहि इति।

**उपयुक्तग्रन्थसूची -**


श्रीमन्नारायणीयम् - Sri Mahalakshmi – Mathrubhutheswarar Trust – 2019
श्रीमद्भागवतमहापुराणम् – Gita Press, Ghorakpur - 29
श्रीमद्वाल्मीकिरामायणम् – R. Narayanaswamy - 2021


---

[1] नारायणीयं 12.98.10

[2] छा.उ.6.2.1

3 वि.पु.6.5.84

4 वि.पु.6.5.85

19 वि.पु.1.22.53

ISSN: 2454 - 2547



# नारायणीये शब्दचित्रवैचित्र्यम्

Dr.V.Yamuna Devi,

Asst.Professor, The KSRI,Chennai

**यदङ्घ्रभिध्यान-समाधि-धौतया धियानुपश्यन्ति हि तत्त्वमात्मनः।**

**वदन्ति चैतत् कवयो यथारुचं स मे मुकुन्दो भगवान् प्रसीदताम्॥** भागवते II.5.21

श्रीशुकमुखात् गलितं परमं फलम् श्रीमद्भागवतम्। तच्च फलं स्त्रीणां बालानां चास्वाद्यं भवेदिति तस्य सारोद्धारेण नारायणभट्टत्रिवर्याः श्रीमन्नारायणीयं नामकस्तोत्रकाव्यसुधां रचयाम्बभूवुः। अस्य स्तोत्रकाव्यस्य प्रतिवर्णेषु पदेषु च सुधास्वादः वर्तते इति नातिशयोक्तिः। काव्यस्यास्य शब्दवैचित्र्यं स्थालीपुलाकन्यायेन अस्मिन् पत्रे आलोक्यते।

कुन्तकाचार्याः (वक्रोक्तिजीविते , प्रथमोन्मेषे.7)काव्यलक्षणं निरूपयन्तः वदन्ति -

**शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि। बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि॥**

इति। अग्रे पुनः पण्डितजगन्नाथस्य (रसगङ्गाधरे, प्रथमानने, 1) काव्यलक्षणमपि -

**रमणीयार्थप्रतिपादकः शब्दः काव्यम्॥**

इत्यस्ति। शब्दब्रह्मस्वरूपिणं नारायणं साक्षात् पश्यद्भिः नारायणभट्टत्रिभिः रचितेऽस्मिन् स्तोत्रकाव्ये श्रीमन्नारायणीये शब्दरामणीयकं प्रत्येकस्मिन् श्लोकेऽपि अनुभूयते इति नात्युक्तिः। तथापि भगवतः रूपलावण्यं तथा तस्य लीलाः वर्ण्यमानाः केचन श्लोकाः अत्र स्वीकृताः यतः (I.7)

**नेत्रैः श्रोत्रैश्च पीत्वा परमरस-सुधाम्भोधिपूरे रमेरन् ॥** इति कवेरेव वचनात् । वर्णविन्यासवक्रत्वं नृसिंहावतारवर्णने (25) भयानकरसद्योतकाः ओजोगुणबद्धाः वर्णाः कालिङ्गमर्दनदशके (55) नर्तनानुकूल ललितपदविन्यासः, रासक्रीडादिवर्णनेषु ( 68-9 ) सर्वत्र शब्दवैचित्र्यं सुस्पष्टं दृश्यते।

काव्यरसनिष्यन्दिनः केचन शब्दाः/श्लोकाश्च अत्र चिताः - प्रथमं तावद् श्री युतस्य नारायणस्यैव श्रीमन्नारायणः इति व्यवहारात् कविना प्रतिपादितं लक्ष्म्याः वर्णनम् प्रथमं आलोक्यते-

**लक्ष्मीः चञ्चला**

लक्ष्म्याः लोकापवादः अस्ति यत् सा चञ्चला इति । तत्र भट्टत्रिणा कारणमेकं प्रतिपादितम्। सा हि लक्ष्मीः निरुपम-माधुर्यैकसारहरेः वपुस्सौन्दर्येण आकृष्टचेताः अन्यत्र गन्तुमशक्त्या स्वभक्तेष्वपि न आस्ते इति अस्मिन् श्लोके वदति (II.4) -

**तेनास्या बत कष्टमच्युत विभो त्वद्रूप- मानोज्ञक-**

**प्रेमस्थैर्यमयादचापलबलाच्चापल्यवार्तोदभूत्॥**

अत्र अचापलबलाच्चापल्यवार्ता इति अचापला इत्यत्र हरौ स्थैर्यत्वम् अभिद्योत्यते। नारायणस्य रूपलावण्यादिगुणैरेव आकृष्टहृदया तस्य गुणकीर्तनरतेषु स्थिरवासा इति द्रढयति यथा (II.5)–

**ये त्वद्ध्यानगुणानुकीर्तनरसासक्ता हि भक्ता जनास्तेष्वेषा वसति स्थिरैव दयितप्रस्तावदत्तादरा॥**

इति । त्वद्गुणानुकीर्तनरसासक्तेषु भक्तेषु एव वासः लक्ष्म्यै रोचते' इत्युक्तद्वारा, तस्याः हरौ प्रेमातिशयो व्यज्यते ।

**दैत्यानां वर्णनम्**

दैत्यानां निग्रहाय तेषामेव हेतुना विष्णुः भूमौ अवतरतीति दैत्यानां विषयः कथं भट्टत्रिभिः प्रतिपादितः इति अत्र आलोक्यते । जयविजयौ दितिकश्यपयोः यमलसुतत्वेन जातौ । तौ च लोकपीडनेन अन्यौ यमाविवासतुः इति चारु वर्णयति भट्टत्रिः (XI.7) - **यमौ च लोकस्य यमाविवान्यौ॥**

पूर्व-परशब्दयोः प्रयोगे च (XI.8) -

**हिरण्यपूर्वः कशिपुः किलैकः परो हिरण्याक्ष इति प्रतीतः।**

इत्यस्मिन् श्लोके पूर्वशब्द प्रयोगे औचित्यम्। अत्र पूर्वशब्देन दैत्यस्य नाम्नि हिरण्यः पूर्वः, तथा जन्मना च ज्येष्ठः इति द्वावपि अर्थौ प्रतिबोधितौ । परश्च अनुजः हिरण्याक्षः इत्यत्रापि परशब्दः पूर्वपदस्य विपर्ययः सन्नपि भ्रातरौ द्वावपि लोकहिंसाविषये अनुगुणौ एवेति सूच्यते कविना।

अत्र कविः हिरण्याक्षस्य चरितम् प्रथमं वर्णयति तत्र हेतुः अवतारक्रमानुसारं वराहावतारं प्रथमं निर्वर्ण्य पश्चात् हिरण्यकशिपोः नृसिंहावतारस्य वर्णनम् करोति॥

**भवदीयां वसुमतीम्**

नारायणभक्तः कपटपटुधीः नारदमुनिः हिरण्याक्षं एवं प्रचोदयति –

**स मायावी विष्णुर्हरति भवदीयां वसुमतीं**
**प्रभो कष्टं कष्टं किमिदमिति तेनाभिगदितः।**
**नदन् क्वासौ क्वासाविति स मुनिना दर्शितपथो**
**भवन्तं सम्प्रापद्धरणिधरमुद्यन्तमुदकात्॥**

अत्र भवदीयां वसुमतीमिति प्रयोगे स्वारस्यम्। श्रीश्च भूश्च नारायणस्य पत्न्यौ इति लोकविदितेऽपि नारदः हिरण्याक्षमुत्तेजयितुम् "भवता अपहृत्य आनीतां क्ष्माम् "इत्यर्थे भवदीयां वसुमतीमिति हिरण्याक्षं प्रति शब्दं प्रयुङ्क्ते।

वराहावतारवर्णनावसरे वराहशब्दपर्यायवाची कोलः यः ललितपदः सः चितः। स एव शिशुकोलः शैलमात्रः भवन् जगर्जिथ घोरघोरमिति उक्तिवैचित्र्यं वहते। (XII.3, 5)-

**नासापुटात् समभवः शिशुकोलरूपी॥**

**कोसावचिन्त्यमहिमा किटिरुत्थितो मे नासापुटात् किमु भवेदजितस्य माया**

**इत्थं विचिन्तयति धातरि शैलमात्रः सद्यो भवन् किल जगर्जिथ घोरघोरम् ॥**

भक्तानां वर्णने केचन पदप्रयोगाः अग्रे निरूप्यन्ते।

**धीरः - प्रह्लादः**

महाकविना कालिदासेन धीरस्य लक्षणमेवमुक्तं -यत् "विकारहेतौ सति येषां न चेतांसि विक्रियन्ते त एव धीराः" इति। तत्र कुमारसम्भवे अनन्यलावण्यपरायाः पार्वत्याः सौन्दर्यदर्शनेनापि शिवस्य चित्तं न व्यचलत् तादृशस्य हरस्य स्थैर्यं वर्णयन् धीरः इति पदप्रयोगे रमणीयता । कामजेतारं धीरः इति व्यवहरति कालिदासः।

तथैव अत्र भट्टत्रिभिः स्वपित्रा प्रह्लादः बहुधा पीडितः – शूलैराविद्धः, दिग्गजगणैः मथितः, महासर्पैर्दष्टः, अनशनगराहारविधुतः, पर्वतश्रृङ्गात् अवक्षिप्तः- तथापि भगवति स्वाचलभक्तिं प्रकटयामास इति कारणात् प्रह्लादं धीरशब्देन निर्दिशति - अत्र प्रह्लादस्य भीत्यभावः परमात्मनः तत्त्वज्ञानाच्च स एव धीरः इति औचित्यम् ।(24.9) -

**पिता शृण्वन् बालप्रकरमखिलं त्वत्स्तुतिपरं**

**रुषान्धः प्राहैनं कुलहतक कस्ते बलमिति।**

**बलं मे वैकुण्ठस्तव च जगतां चापि स बलं**

**स एव त्रैलोक्यं सकलमिति धीरोऽयमगदीत्॥**

यद्यपि प्रह्लादः जानाति यत् तस्य पिता क्रोधान्धः तं हनिष्यति इति तथापि स्थैर्येण नारायणः एव जगतामाधारभूतः ईश्वरः इति झटिति वदति। प्रह्लादस्य परिचयं कुर्वद्भिः भट्टत्रिभिःउच्यते यत् (24.4c)-

**स वै जात्या दैत्यः शिशुरपि समेत्य त्वयि रतिम्**

अत्र वै इति अव्ययस्य प्रयोगेण उक्तिवैशिष्ट्यं वर्तते। सः जात्या केवलं दैत्यः न तु स्वभावेन इति अर्थं प्रकटयति ।

**मानी – ध्रुवः**

सुरुच्या अधिक्षिप्तः ध्रुवः स्वमात्रा सुनीत्या च भगवदाराधनं उपदिश्यते । तदेव कर्त्तव्यतया निश्चित्य पञ्चवर्षकः बालकः नगरात् वनं गतः इति वर्णयन् कविः उद्घोषयति यत् स किल मानी इति -

**आकर्ण्य सोऽपि भवदर्चननिश्चितात्मा मानी निरेत्य नगरात् किल पञ्चवर्षः**।17.4 ab

सः मानी। सः किल मानी। सः पञ्चवर्षः किल मानी।यतः लोके यद्यपि जनाः अपमानसहस्रेणापि हरौ भक्तिं न कुर्वन्तीति उक्तिवैचित्र्येण कविः ध्रुवस्य भक्तिं वर्णयन् सम्यक् प्रतिपादयति।

**दुर्वासाः परार्तिशीलः**

दुर्वाससं मुनिं एकेनैव शब्देन परिचयं कारयति अम्बरीषचरितवर्णनावसरे यथा-

**तत्राथ पारणदिने भवदर्चनान्ते दुर्वाससास्य मुनिना भवनं प्रपेदे।**

**भोक्तुं वृतश्च स नृपेण परार्तिशीलो मन्दं जगाम यमुनां नियमान् विधास्यन्॥** (33.4)

दुर्वाससो मुनेः प्रवृत्तिः महाभारतवनपर्वण्यपि पाण्डवानां क्लेशकरणार्थमेव स्वशिष्यवृन्दैः द्रौपद्याः भोजनानन्तरमेव सः ययौ इति वर्णिता वर्तते।

एवमेव शकुन्तलायाः शापावसरमपि । शाकुन्तले मुनेः व्यक्तित्वं प्रकटयति कालिदासकविः।

अत्रापि सः मुनिः द्वादशीपारणवेलायाः अतिक्रमानन्तरमेव स्वस्य भोजनमिति कृतसङ्कल्पेन अम्बरीषनृपेण पारणार्थे वृतेऽपि मन्दमेव यमुनां जगाम इति सः परार्तिशीलः इति तस्य चारित्र्यचित्रणं एकेनैव पदेन कविः निर्दिशति ।

रामायणस्य सुन्दरकाण्डस्य सङ्ग्रहेऽपि शब्दप्रयोगचारुत्वं दृश्यते यथा अत्र-

**त्वद्वार्ताकर्णनोद्यद्गरुदुरुजवसम्पातिसम्पातिवाक्य-**

**प्रोत्तीर्णार्णोधिरन्तर्नगरि जनकजां वीक्ष्य दत्वाङ्गुलीयम्।**

**प्रक्षुद्योद्यानमक्षक्षपणचणरणः सोढबन्धो दशास्यं**

**दृष्ट्वा प्लुष्ट्वा च लङ्कां झटिति स हनुमान् मौलिरत्नं ददौ ते॥** (35.3)

अस्मिन् श्लोके हनुमान् सागरोल्लङ्घनं कृत्वा सीतायाः अन्वेषणावसरे रात्रौ चन्द्रिकायाः प्रकाशे लङ्कां दृष्टवान् इति वाल्मीकिर्वर्णयति। अत्र भट्टत्रिः अन्तर्नगरि वीक्ष्य जनकजामिति उक्त्वा उत्तरत्र दृष्ट्वा प्लुष्ट्वा लङ्कामिति वर्णयति ।यतः रात्रौ हनुमता लङ्का सम्यक् न दृष्टा, अपि च, लङ्कायाः दहनार्थं तत्र तत्र नगरीं सम्यक् वीक्ष्य, नगरी दग्धा; अपि च जानकी न दग्धा भवेदिति सावधानेन दृष्ट्वा लङ्कां प्लुष्टवानिति अत्र दृष्ट्वा इति पदस्य सामञ्जस्यं वर्तते। (39.9)-

यशोदायाः चारित्र्यमपि पदद्वयेन निर्वर्ण्यते भट्टत्रिभिः –

**अहो खलु यशोदया नवकलाय-चेतोहरं भवन्तमलमन्तिके प्रथममापिबन्त्या दृशा।**

**पुनः स्तनभरं निजं सपदि पाययन्त्या मुदा मनोहरतनुस्पृशा जगति पुण्यवन्तो जिताः॥**

भगवन्तं नारायणं पुत्रत्वेन प्राप्य तस्य बाल्यलीलादीनां दर्शने च यशोदायाः अनन्यसाधारणसौभाग्यं इति बहवः बहुधा वर्णयन्ति । अत्र तु भट्टत्रिभिः जगति पुण्यवन्तो जिताः इति भङ्ग्यन्तरतया वाचा क्लृप्तरूपेण च निरूप्यते इति रसात्मकः।एवमेव वर्णविन्यासैः उचितपदप्रयोगैः भक्तिरसभरितैः श्लोकैः आबालैः सेव्यम् पण्डितैर्मान्यं भक्तैः सेव्यमानं वर्तते इदं श्रीमन्नारायणीयं नाम स्तोत्रकाव्यम्।

ISSN: 2454 - 2547

# श्रीमन्नारायणीयस्तोत्रे भक्तिरसः

- PADMANABHAN.A

**सच्चिदानन्दरूपाय विश्वोत्पत्त्यादिहेतवे ।**
**तापत्रयविनाशाय श्रीकृष्णाय वयं नुमः ॥**

रसशास्त्रेऽस्मिन् आलङ्कारिकैः पण्डितैः लोकोत्तरवर्णनानिपुणकविकर्मणः काव्यस्य प्रयोजनं बहुधा उक्तमस्ति । तत्र काव्यप्रकाशे आचार्यस्य मम्मटस्य इयं उक्तिः भवति , यथा –

**" काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।**
**सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे" ॥ ( का. प्र. 1. 2 )** इति ।

यथा कालिदासादीनां यशः , श्रीहर्षादीनां धनप्राप्तिः , राजगुरुकान्तादीनां व्यवहारज्ञानं , तथा अमङ्गलनिवृत्तौ वातरोगात् पीडितगुरोः रोगप्रशमनं कर्मविपाकप्रायश्चित्तरूपेण शिष्यः मेल्पत्तूर् नारायणभट्टः रोगप्रतिमां प्रत्यगृह्णात् । परमात्मनः करुणामेव रोगनिवृत्तौ परमौषधम् निश्चित्य सत्वरमेव अयं शिष्यः गुरुपवनपुरीं समासाद्य भक्तिरसप्रधान नारायणानुबन्धीय श्रीमद्भागवतार्थसङ्ग्रहस्वरूपाणि सहस्रोत्तराणि पद्यानि निर्माय रोगान्निर्मुक्तः सञ्जातः ।

**रसस्वरूपम् –**

किञ्च सकलप्रयोजनमौलिभूतं काव्यपठनसमनन्तरमेव विगलितवेद्यान्तरमानन्दं रसास्वादनं सहृदयैः अनुभूयते , अर्थात् रसास्वादनेन आनन्दः समुद्भवति । रस्यते – आस्वाद्यते इति रसः । अस्य रसस्य लक्षणं आचार्येण धनञ्जयेन दशरूपके एवं उक्तम् आसीत् , यथा –

**" विभावैरनुभावैश्च सात्विकैर्व्यभिचारिभिः ।**
**आनीयमानस्वादुत्वं स्थायी भावो रसः स्मृतः ॥ "** इति । विभाव, अनुभाव, सात्विक, व्यभिचारिभावादीनां संयोगात् रसनिष्पत्तिः इति भरतमुनिना अपि सामान्यलक्षणमुक्तम् । अयं च रसः नवधा विभज्यते । यथा –

**" शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः । बीभत्साद्भुतशान्ताश्च रसाः पूर्वैरुदाहृताः ॥ "**

इति । यथा शृङ्गारः, हास्यः , करुणः, रौद्रः , वीरः , भयानकः , बीभत्सः, अद्भुतः, शान्तः इति नव रसाः सन्ति । एवं रीत्या प्रत्येकस्य रसस्य स्थायी भावोऽपि भवति यथा – **" रतिः, हासः, शोकः, क्रोधः, उत्साहः, भयं, जुगुप्सा, विस्मयः, शमः"** इति । तत्र " भक्तिः" इत्यपि अन्यतमः रसः भवति

रससामग्रीसद्भावात् इति केचन आलङ्कारिकाः अङ्गीकुर्वन्ति, परन्तु अन्ये भक्तिरसोऽपि रत्यादि स्थायिषु संक्षिप्तो भवति इति प्रदर्शयन्ति ।

**भक्तिरसः –**

भक्तिः नाम उपायपूर्वकं भगवति मनसः स्थिरीकरणमेव इति। नारदभक्तिसूत्रे **"सा त्वस्मिन् परमप्रेमरूपा"** इति भक्तिं प्रति उक्तः । श्रीमद्भागवतपुराणे भक्तेर्नवविधत्वमुक्तं –

**" श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥"** इति । अत्र प्रत्येकविधस्य प्रत्येकः आदर्शपुरुषः भवति, यथा श्रवणस्य परीक्षित्, कीर्तनस्य नारदः, स्मरणस्य प्रह्लादः , पादसेवनस्य लक्ष्मीः , अर्चनस्य पृथुः , वन्दनस्य अक्रूरः , दास्यस्य आञ्जनेयः, सख्यस्य अर्जुनः, तथा आत्मनिवेदनस्य बलिः इत्यादयः भक्तिरसे प्रसिद्धाः । भरतमुनिवाक्यानुसारेण भक्तिः नाम ईश्वरविषया रतिः इत्यर्थः । भक्तिरसस्य लक्षणं भक्तिरसामृतसिन्धौ एवमुक्तम् यथा –

**" विभावैरनुभावैश्च सात्विकैर्व्यभिचारिभिः । स्वाद्यत्वं हृदि भक्तानां आनीय श्रवणादिभिः ।**

**एषा कृष्णरतिः स्थायीभावो भक्तिरसो भवेत् ॥"** इति । अस्यायमर्थः यथा विभावानुभाव-सात्विकव्यभिचारादिभावैः श्रवणादिभिः कारणात् भक्तानां मनसि कृष्णरतिः यत् स्वाद्यते तदेव भक्तिरसः इति । भक्तिरसस्य स्थायित्वम् उच्यते यथा – **" स्थायीभावोऽत्र सः प्रोक्तः श्रीकृष्णविषया रतिः "** इति। यथा केनाप्युपायेन श्रीकृष्णे मनोनिवेशः भवति, तदेव स्थायीभावः इति । उदाहरणतया द्वितीये दशके - (1.2.7.)

**" एवम्भूततया हि भक्त्यभिहितो योगस्य योगद्वयात्**

**कर्मज्ञानमयाद्भृशोत्तमतरो योगीश्वरैर्गीयते ।**

**सौन्दर्यैकरसात्मके त्वयि खलु प्रेमप्रकर्षात्मिका**

**भक्तिर्निश्रममेव विश्वपुरुषैर्लभ्या रमावल्लभ॥"** इत्यत्र कविः भगवत्प्रेम्णा यः प्रकर्षोऽतिशयः तदात्मिका भक्तिः सकलजनैः अनायासं लभ्यते यथा सौन्दर्यस्य रसत्वं, आह्लादजनकत्वात् इति । अत्र भगवत्सौन्दर्यवर्णनाद्वारा स्थायीभावः प्रदर्शयति ।

तथा भक्तिरसस्य विभावानुभावलक्षणे भक्तिरसामृतसिन्धौ –

**" ये कृष्णभक्तमुरलीनादाद्या हेतवो रतेः । अनुभावास्तु चित्तस्थभावानां अवबोधकाः ।**

**ते बहिर्विक्रियाप्रायाः प्रोक्ता उद्भास्वराख्यया ॥"** इति ।

अत्र गोविन्दो गोप्यश्चालम्बनविभावः। चन्द्रमन्दानिलचरित्रश्रवणादयः उद्दीपनविभावाः । कटाक्षवीक्षणादिशरीरजभावाः अनुभावाः इति । यथा नारायणीये द्वितीये दशके – (1.2.3.)

**" यत्त्रैलोक्यमहीयसोऽपि महितं सम्मोहनं मोहनात्**

**कान्तं कान्तिनिधानतोऽपि मधुरं माधुर्यधुर्यादपि ।**

**सौन्दर्योत्तरतोऽपि सुन्दरतरं त्वद्रूपमाश्चर्यतोऽ -**

**प्याश्चर्यं भुवने न कस्य कुतुकं पुष्णाति विष्णो विभो ॥"** इति ।

अस्यायमर्थः यत् त्रैलोक्येऽस्मिन् अतिशयेन पूजितं उत्कृष्टं वस्तु तस्मादपि महितं अत्युत्कृष्टं । मोहनं वस्तु तस्मादपि अतिमोहनं आह्लादकं , माधुर्यात् मधुरं , सौन्दर्यात् सुन्दरं , यत् अद्भुतालम्बनं वस्तु तस्मादपि आश्चर्यं भगवद्रूपम् । अत्र मुमुक्षूनां जीवन्मुक्तानामपि भगवद्रूपं दर्शनश्रवणस्मरणादौ औत्सुक्यं जनयति इत्यर्थे भक्तिरसस्य विभावः प्रदर्शयति । तथा च तृतीये दशके – (1.3.7.)

**" विधूय क्लेशान्मे कुरु चरणयुग्मं धृतरसं**

**भवत्क्षेत्रप्राप्तौ करमपि च ते पूजनविधौ ।**

**भवन्मूर्त्यालोके नयनमथ ते पादतुलसी –**

**परिघ्राणे घ्राणं श्रवणमपि ते चारुचरिते ॥"** इत्यत्र कवेः स्वस्य रोगान् बाह्यानाभ्यन्तरान् विधूय भवत्क्षेत्रप्राप्तौ सञ्जातकौतुकं कर्तव्यं, करयुगलमपि पूजनस्य विधिव्यापारस्य धृतरसं कर्तव्यं, नयनद्वयमपि भगवतः मूर्तिदर्शने धृतरसं कर्तव्यं, तथा च श्रीपादे अर्चितायाः तुलस्याः परिघ्राणे घ्राणेन्द्रियं धृतरसं कर्तव्यं, श्रोत्रेन्द्रियमपि मनोहरे चरित्रे स्तुतौ धृतरसं कर्तव्यमित्यादि विषये अनुभावः प्रदर्शितः । एवमेव सात्विकभावानां लक्षणं यथा –

**" कृष्णसम्बन्धिभिः साक्षात्किञ्चिद्वा व्यवधानतः । भावैश्चित्तं इहाक्रान्तं सत्वं इत्युच्यते बुधैः ।**

**सत्वादस्माद्समुत्पन्ना ये भावास्ते तु सात्विकाः ॥"** इति । यथा मनः रतिभावेन कृष्णापेक्षया साक्षात् परोक्षात् वा आक्रान्तं भवति तदेव सत्वं इति । अस्मात् सत्वात् ये भावाः उत्पद्यन्ते त एव सात्विकभावाः इत्युच्यन्ते । तथा स्तम्भप्रलयरोमाञ्चादयः साक्षात्सम्बन्धिताः सात्विकभावाः इत्युच्यते । उदाहरणतया द्वितीये दशके – ( 1.2.6 )

**" एवम्भूतमनोज्ञतानवसुधानिष्यन्दसन्दोहनं**

**त्वद्रूपं परचिद्रसायनमयं चेतोहरं शृण्वताम् ।**

**सद्यः प्रेरयते मतिं मदयते रोमाञ्चयत्यङ्गकं**

**व्यासिञ्चत्यपि शीतबाष्पविसरैरानन्दमूर्च्छोद्भवैः ॥** " इत्यस्मिन् श्लोके भगवद्भक्तेः उत्पत्तिं प्रदर्शयति । यथा भगवद्कथाश्रवण नामकीर्तनादि लक्षणया आनन्दमूर्छोद्भवैः शीतबाष्पविसरैः प्रेमप्रकर्षणाहैतुकेन सकलेन्द्रियाणां वृत्तिः एव भक्तिरसः । अत्र आनन्दमूर्छा शीतबाष्पविसरादि शब्दैः सात्विकभावः प्रदर्श्यते । तद्वत् व्यभिचारिभावाः नाम -

**" अथोच्यन्ते त्रयस्त्रिंशद्भावा ये व्यभिचारिणः । विशेषेणाभिमुख्येन चरन्ति स्थायिनं प्रति॥"** इति । अस्यार्थः यथा ये भावाः विशेषेण आभिमुख्येन च स्थायीभावं प्रति चरन्ति ते व्यभिचारिणः इति । अत्र निर्वेदग्लानिशङ्कादयः त्रयस्त्रिंशत् भावाः व्यभिचारिणः इति अङ्गीक्रियन्ते। यथा षण्णवतितमे दशके –

(96.8.) **" निर्विण्णः कर्ममार्गे खलु विषमतमे त्वत्कथादौ च गाढं**

**जातश्रद्धोऽपि कामानयि भुवनपते ! नैव शक्नोमि हातुम् ।**

**तद्भूयो निश्चयेन त्वयि निहितमना दोषबुद्ध्या भजंस्तान्**

**पुष्णीयां भक्तिमेव त्वयि हृदयगते मङ्क्षु नङ्क्ष्यन्ति सङ्गाः ॥"** श्लोकेऽस्मिन् विषमतमे दुःखभूयिष्ठे कर्ममार्गे स्वर्गादौ विरक्तः भगवत्कथायां जातश्रद्धश्च यद्यपि भवति, तथापि काम्यानि पुत्रमित्रवित्तानि नैव हातुं शक्नोतीति । तस्मात् भूयः पुनः पुनः निश्चयेन भगवति निहितमना भूत्वा दोषबुद्ध्या तान् कामान् सेवमानः मुक्तिमेव पुष्णीयाम् । भगवति हृदयगते सङ्गाः विषयश्रद्धाः झटिति नाशं गमिष्यन्तीत्यत्र व्यभिचारिभावः कविना प्रदर्श्यते ।

अत्र स्वीकृतविषयसम्बन्धे श्रीमन्नारायणीये भक्तिरसः प्राधान्येन दृश्यते । एवं रतिः नाम स्थायीभावः विभावानुभावसात्विकव्यभिचारिभावैः सह भक्तिरसत्वं संसिध्यति ।यथा नारायणभट्टादिभिः कविभिः वर्णितस्य विष्णोः विष्णुभक्तानां वा चरित्रस्य नवरसात्मकस्य श्रवणादिना जनितश्चमत्कारो एवात्र भक्तिरसः इति स्वीकृतः, तावत् भक्तिरसस्यैव हास्यशृङ्गारकरुणरौद्रभयानकबीभत्सादि अन्यरसरूपेणानुभवात् । तत्र च भगवद्भक्तिः नाम किं इति कविः वर्णयति यथा – (1.3.6)

**" भवद्भक्तिस्तावत् प्रमुखमधुरा त्वद्गुणरसात् किमप्यारूढा चेदखिलपरितापप्रशमनी ।**

**पुनश्चान्ते स्वान्ते विमलपरिबोधोदयमिलन् महानन्दाद्वैतं दिशति किमतः प्रार्थ्यमपरम् ॥"** इत्यत्र भगवद्गुणान् श्रृण्वतां पुनः पुनः शुश्रूषा जायते । तस्मात् कथारसामृतझरीनिर्मज्जनात् भक्तिरसः उपजायते

इति । तथा च आदिमध्यावसानेषु आह्लादजनकतया भक्तिरेव प्रार्थ्या, नान्यत् किमपि इति प्रदर्शयति । एवं भक्तिप्रयोजनं उपवर्णयति । यथा – (1.3.5.)

**" भवद्भक्तिः स्फीता भवतु मम सैव प्रशमये-**

**दशेषक्लेशौघं न खलु हृदि सन्देहकणिका ।**

**न चेद्व्यासस्योक्तिस्तव च वचनं नैगमवचो**

**भवेन्मिथ्या रथ्यापुरुषवचनप्रायमखिलम् ॥"** इत्यत्र कविः यदि भगवद्भक्तिः अशेषक्लेशौघं न प्रशमयेत् तर्हि व्यासादिभगवद्भक्तिमाहात्म्यप्रतिपादकानि वेदवाक्यानि पुराणवचनानि च रथ्यापुरुषवचनवत् अप्रमाणं स्युः इति भगवद्भक्तेः प्रामाणिकत्वं प्रदर्शयति । तथा चतुर्थे दशके –(2.4.4.) **" अस्फुटे वपुषि ते प्रयत्नतो धारयेम धिषणां मुहुर्मुहुः ।**

**तेन भक्तिरसमन्तरार्द्रतामुद्वहेम भवदङ्घ्रिचिन्तकाः ॥"** इत्यत्र अस्पष्टे आपाततः प्रतीते तव वपुषि प्रयत्नतो मुहुर्मुहुः बुद्धिं धारयेम । तथा अन्यविषयालम्बने सति पुनः पुनः तच्छमनं कर्तव्यम् एवं धारणां कुर्याम इति, तेन भक्तिरेव रसः तदनुभावमन्तरार्द्रतां प्राप्नुयाम । ततो वयं भगवच्चरणाम्भोजस्मरणनिरताः परमभागवताश्च भवेमेति । अत्र भक्तिरसः कविना रसिकैश्च आस्वाद्यते। एवञ्च शततमे दशके – (100.1.) **" अग्रे पश्यामि तेजो निबिडतरकलायावलीलोभनीयं**

**पीयूषाप्लावितोऽहं तदनु तदुदरे दिव्यकैशोरवेषम् ।**

**तारुण्यारम्भरम्यं परमसुखरसास्वादरोमाञ्चिताङ्गै –**

**रावीतं नारदाद्यैर्विलसदुपनिषत्सुन्दरीमण्डलैश्च ॥"** इति ।

अत्र कविः तस्य भक्तेः साफल्यं अनुभवति यथा तेजोप्रभामण्डलं तद्दर्शनानन्तरं दिव्यसात्विक-प्रकाशोज्जवलः तारुण्यारम्भरम्यं षोडशवर्षीयं किमपि रूपं पश्यतीति । तथा च परब्रह्म श्रीकृष्णः, गोप्यस्तत्प्रतिपादकोपनिषदः, श्रीनारदादयस्तदुपदेष्टारः, द्रष्टाधिकारी इति। एवं भगवदवतारचरितस्मरण-कीर्तनादिभिरुपबृंहितप्रेमलक्षणभक्तिपरिपाकवशेन हृदयाकाशमवतीर्णं स्फुटप्रतीयमानावयववेषविशेषादिकं भगवद्रूपं पुर इवावलोकयन् स्तुत्वा यथानुभूतं भक्तिरसस्याह्लादं आस्वादयति। एवं रीत्या नारायणभट्टविरचितस्य श्रीमन्नारायणीयस्य पठितृणां सहृदयानां मनसि रसास्वादः संसिध्यति ॥

**नृणां जन्म सहस्रेण भक्तौ प्रीतिर्हि जायते । कलौ भक्तिः कलौ भक्तिः भक्त्या कृष्णः पुरः स्थितः ॥**

# सर्वत्र नारायणीयं, सर्वेषां कृते नारायणीयम्।

**बु. नवीना,** चेन्नपुरी

छात्रा, संस्कृतभाषाप्रचारिणीसभा, चित्तूरु

वैद्युतसन्देशः - naveena_b_2002@yahoo.co.in

पुष्पं यद्यपि सुगन्धभरितं, वायुना एव तस्य सौरभं विदितं जायते। इत्थं महत्त्वपूर्णस्य विषयस्य प्रचारकानां पूजनीयत्वम् उद्घाटयन्, भोजराजः चम्पूरामायणस्याऽदौ,

**" उच्चैर्गतिर्जगति सिध्यति धर्मतश्चेत्, तस्य प्रमा च वचनैः कृतकेतरैश्चेत्।**

**तेषां प्रकाशनदशा च महीसुरैश्चेत्, तानन्तरेण निपतेत् क्व नु मत्प्रणामः" ॥**

इति वेदप्रकाशकेभ्यो ब्राह्मणेभ्यो नतिम् अर्पयति।

इमां सरणिम् अनुसृत्य, महत्तरग्रन्थस्य नारायणीयस्य प्रचारकानां परिचयः स्थालीपुलाकन्यायेन पत्रेऽस्मिन् क्रियते। प्रवचनैः, सङ्गीतेन, नृत्येन, रचनया च नारायणीयसुधाबिन्दूनां सर्वदिक्सिञ्चनम् एतैः सुघटितम्।

**सेङ्गालिपुरम्-अनन्तरामदीक्षितः**

प्रवचनक्षेत्रे भीष्मतुल्याः नूनम् एते। तमिलनाडुराज्यस्थानां नारायणीयस्तवस्य संस्तवः एतैः एव कारितः इति वक्तुं नास्ति अतिशयोक्तिः। स्वरगाम्भीर्येण, भक्तिभरितत्वेन, रागयुक्ततया च श्लोकपठनम् एतेषां प्रत्येकता। आकाशवाण्या, दूरदर्शनेन च एतेषाम् उपन्यासानां ध्वनिमुद्रणानि कारितानि।

वेदशास्त्रेषु पण्डितप्रकाण्डाः एते नित्याग्निहोत्रिणः च। विविधरोगनिवारणार्थं, ऋणविमोचनार्थं, बाधोपशमनार्थं, सत्सन्तानप्राप्त्यर्थं, दुःस्वप्नपरिहारार्थं च अनेकानि स्तोत्ररत्नानि एतैः स्वयं प्रणीतानि च। महिषासुरमर्दनीस्तोत्रम् अपि एतैः जनबाहुल्यं प्रापितम्।

यद्यपि भागवतपुराणे विद्यमानाः अंशाः प्रायशः सर्वे अपि नारायणीये सन्ति, जडभरतस्य चरित्रम् अधिकृत्य नारायणीये न प्रस्तावः वर्तते इति धिया दीक्षितैः 'जडभरतचरित्रं' विरचितं, गुरुवायुपुरीशस्य मन्दिरे समर्पितं च।

अपि च, गुरुवातपुरीशपञ्चकम् एतैः सम्मोहनतया प्रणीतं, मोहनरागयुक्तत्वेन गीतं च। विविधावसरेषु नारायणीयपठनात् अनेकाः भगवल्लीलाः एतैः, एतेषां शिष्यैः च अनुभूताः, अक्षररूपेण सङ्कलिताः च। एवम्प्रकारेण, नारायणीयप्रचारे एतैः कृतं योगदानम् अनुपमानम्, अनितरसाध्यं च। 'उपन्यासचक्रवर्ती', 'अमृतवाग्वर्षी', 'भागवतकेसरी', इत्यादिबिरुदुभिः एते समलङ्कृताः।

**सामवेदं-षण्मुखशर्मा**

सामवेदं-षण्मुखशर्मावर्याः अस्माकं समकालिकाः। एते पुरा चेन्नपुर्यामेव अवसन्, किन्तु इदानीम् एते भाग्यनगरवासिनः (अर्थात् Hyderabad-वासिनः)। 'ऋषिपीठम्' इति संस्थां, मासिकीं पत्रिकां च स्थापितवन्तः एते। संस्कृततेलुगुभाषयोः निपुणाः एते पुरा पत्रिकासम्पादनक्षेत्रे, चलच्चित्रगीतरचनाक्षेत्रे च कृतभूरिपरिश्रमाः।

नारायणीयस्य महिमानम् उपन्यासरूपेण तेलुगुराज्ययोः प्रपञ्चयन्ति एते। अस्मिन् प्रयत्ने एते अग्रगण्याः इति वक्तुं योग्यम्। न केवलं नारायणीयं, परन्तु, सौन्दर्यलहरी, शिवानन्दलहरी, अपरोक्षानुभूतिः, श्रीमद्रामायणं, भगवत्पादविरचिता प्रश्नोत्तरमालिका इतिप्रभृति अनेककृतीः अधिकृत्य एतेषाम् उपन्यासाः जनान् आनन्दयन्ति, उद्बोधयन्ति च।

विविधप्रसारमाध्यमेषु एतेषाम् उपन्यासाः अनवरतं प्रचलन्ति। प्रत्येकतया, तिरुमलतिरुपतिदेवस्थानानां श्रीवेङ्कटेश्वरभक्तिवाहिन्याम् (अर्थात् TTD SVBC तस्याम्) अपि एतेषाम् उपन्यासः रात्रौ सार्धनववादने प्रसार्यते।

उपन्यासे तु यं विषयम् अधिकृत्य एते बोधयन्ति, तस्य समानार्थसूचकानि शास्त्रीयसङ्गीतकीर्तनानि अपि प्रस्तुवन्ति एते। स्वयं संस्कृते, तेलुगुभाषायां च सहस्राधिकभक्तिगीतानि व्यरचयन् सामवेदं-षण्मुखशर्मवर्याः।

आधुनिकोदाहरणैः सर्वान् सभ्यान् रञ्जयन्ति, प्रत्येकतया युवजनान् आकर्षयन्ति। निगूढार्थोपेतान् विषयान् सरलतया बोधयन्ति च। षण्मुखशर्मवर्याः सभाकार्यक्रमेषु प्रेक्षकान् प्रश्नान् पृष्ट्वा, तेषां ज्ञानं, जागरूकत्वं च परीक्षन्ते!

आर्षवाङ्मयम् अधिकृत्य विविधदेशेषु उपन्यासान् प्रयच्छन्ति एते। इत्थं प्रवासभारतीयान्, तेषां सन्ततिं च सनातनधर्माभिमुखाः कारयन्ति। अमेरिका, आस्ट्रेलिया, ब्रिटन् इत्यादिदेशेषु नारायणीयोपन्यासाः एतैः नैकवारम् अनुष्ठिताः।

'वाग्देवीवरपुत्रः', 'समन्वयसरस्वती', 'आर्षधर्मोपन्यासकेसरी' इत्याद्युपाधिभिः एते मण्डिताः।

**पोरयत्तु-लीला (P. लीला)**

नारायणीयगानविदुषीणां धुरि कीर्तनीयाः एताः। एतासां नारायणीयगानस्य सङ्गीतकर्तारः तु V. दक्षिणामूर्तिवर्याः। लीलामहोदयानां माधुर्योपेतकण्ठस्वरेण आचरितम् इदं ध्वनिमुद्रणं स्वयं गुरुवायुपुरीदेवस्थानेन नियोजितम् इति विशेषांशः।

P. लीलामहोदयाः शास्त्रीयसङ्गीते **चेम्बै वैद्यनाथभागवत**महानुभावानां शिष्याः एताः। चलच्चित्रेषु अपि प्रख्याताः नेपथ्यगायिकाः एताः। पञ्चसहस्राधिकानि गीतानि एताभिः श्रुतिसुभगत्वेन गीतानि जातानि। प्रशान्तसङ्गीतझरी इव भाति एतासां नारायणीयगानम्। अतः एव अनेकदशाब्देभ्यः पूर्वं कृतम् इदं ध्वनिमुद्रणम् अद्यावधि सकौतुकं श्रूयते, न केवलं केरळराज्ये, किन्तु सर्वत्रापि ।

'पद्मभूषणः', 'गानकोकिला', 'गानमणिः', 'सङ्गीतसरस्वती', 'भक्तिगानतिलकम्' इत्यादिपुरस्कारैः एताः विभूषिताः।

**त्रिशूर्-रामचन्द्रन्**

अस्मत्समकालिकसङ्गीतविद्वत्तल्लजेषु एते अन्यतमाः। एते सम्पूर्णनारायणीयस्य सङ्गीतकल्पनं, गानं च अद्भुततया, विविधरागरञ्जितत्वेन अकुर्वन्। एतत्बृहत्कार्यार्थम् एतैः संवत्सरचतुष्टयं यावत् समयः यापितः। ध्वनिमुद्रणकेन्द्रे (अर्थात् Studio तस्मिन्) प्रत्यहं दशवादनात् आरभ्य, सायङ्काले पञ्चवादनपर्यन्तं परिश्रमः विहितः एतैः। प्रत्येकतया, उच्चारणे दोषरहितत्वार्थम् एतैः प्रयासः कृतः। एतत् ध्वनिमुद्रणं चेम्बै वैद्यनाथभागवतवर्यैः वातालये एव आविष्कृतम्। यद्यपि एतत् ध्वनिमुद्रणम् अतिदीर्घम्, तथापि श्रोतारः भक्तिगङ्गाप्रवाहे अवगाहानानुभूतिम् एव प्राप्नुवन्ति, न कदापि आसक्तिहीनाः जायन्ते।

'पद्मभूषणः', 'सङ्गीतकलानिधिः', 'सङ्गीतचूडामणिः', 'नारायणीयगानप्रवीणः', 'काञ्चीकामकोटिपीठास्थानविद्वान्' इति प्रभृति अनेकपुरस्कारैः एते सम्मानिताः।

**क.जो.येसुदासः (K.J. Yesudas)**

नारायणीयगानस्य पर्यायपदत्वेन व्यवह्रियन्ते एते प्रथितगायकाः। एते नारायणीयगानं विना सङ्गीतकार्यक्रमं स्वयं न समापयन्ति, न वा वीक्षकाः समापयितुम् अनुमतिं यच्छन्ति ! बहवः सङ्गीतानभिज्ञाः अपि एतेषां नारायणीयं श्रोतुम् एव चीटिकां क्रीत्वा सभासु उपस्थिताः भवन्ति। यदा एते "कृष्ण! कारुण्यसिन्धो" इति मधुरगम्भीरस्वरेण, भक्तिपारवश्येन भगवन्तं सम्बोधयन्ति, तदा सर्वे वीक्षकाः अप्रयत्नतया एव अञ्जलिं घटयन्ति। "पावनगुरुपवनपुराधीशम् आश्रये" इति गीतम् अपि एतैः ख्यातिङ्गमितम्। इत्थं कृष्णभक्तिमकरन्देन सर्वधर्मानुयायिनः अपि रोलम्बायन्ते इति विषयस्य येसुदासमहोदयाः अद्भुतं निदर्शनम्।

**वेम्पटि-चिन्नसत्यम्**

अस्माकं शास्त्रीयनृत्यगुरुषु विश्वविख्यातिङ्गतानाम् अन्यतमाः एते। शास्त्रीयनृत्यकार्यक्रमेषु एतैः एव प्रायशः प्रप्रथमतया नारायणीयश्लोकानां स्थानं प्रकल्पितम्।

आन्ध्रप्रदेशस्य कुचेलपुर्याम् (अर्थात् कूचिपूडिग्रामे) सञ्जाताः एते निर्धनत्वात् पादयात्रया एव मद्रपुरीं प्राप्तवन्तः। निरुपमाननृत्यनिर्देशकत्वप्रतिभया, अध्यापनदीक्षया च एते सहस्रशः शिष्याणाम्

आराध्यभूताः अभवन्। बहूनि नृत्यरूपकानि एतैः कल्पितानि। श्रीनिवासकल्याणं, क्षीरसागरमथनं, रुक्मिणीकल्याणम्, अभिज्ञानशाकुन्तलं, किरातार्जुनीयम् इत्येवमादीनि रूपकाणि एतेषां कीर्तिकिरीटे विराजमानानि अनर्घरत्नानि। शताधिक-व्यस्तनृत्यांशाः (अर्थात् solo items) अपि एतैः नेत्रोत्सवतया सृष्टाः। एतेषां सर्जने लालित्यम्, औचित्यं च वेम्पटि-महाभागानां प्रत्येकताद्वयम् इति वक्तुं शक्यते। नारायणीये तु "अग्रे पश्यामि", "नीलाभं कुञ्चिताग्रम्", "उत्तुङ्गोल्लासिनासम्" इति श्लोकत्रयस्य नृत्यरूपम् अपूर्वतया दिष्टम् एतैः। सम्प्रतिकालेऽपि अनेकासु वेदिकासु एते प्रदर्श्यमानाः सन्ति, श्रद्धाभक्तिभ्याम् अवलोक्यमानाः च विद्यन्ते। वेम्पटि चिन्नसत्यं-महाभागाः 'पद्मभूषणः', 'कालिदासपुरस्कारः', 'कलाप्रपूर्णः' 'सम्मानकरडाक्टरेट्' इत्यादिभिः उपशोभिताः।

**कल्लूरि-वेङ्कटसुब्रह्मण्यदीक्षिताः**

तेलुगुभाषायां नारायणीयस्य अनुवादसहितटिप्पणी एतैः एव प्रप्रथमतया लिखिता। अर्थात् , टिप्पण्या साकं, प्रत्येकस्य संस्कृतश्लोकस्य समानार्थकः तेलुगुश्लोकः अपि एतैः छन्दोबद्धतया कल्पितः।

एते चतुर्दशाधिकशतवर्षेभ्यः पूर्वम् (अर्थात् 1908 आङ्ग्लवर्षे) आन्ध्रप्रदेशे ताळ्ळपूडिग्रामे दत्तात्रेयजयन्त्यां जनिताः। संस्कृततेलुगुभाषयोः उद्दण्डपण्डिताः एते आन्ध्रगीर्वाणविद्यापीठस्य संस्कृतकलाशालायाम् आचार्याः च आसन्। जगद्गुरूणां चन्द्रशेखरेन्द्रसरस्वतीनां दिव्याशीर्भिः एतेषां रचनाप्रस्थानम् आरब्धम्। एतेषां विंशतितमवयसि एव देवेश्वरमहाकविप्रणीतं 'कविकल्पलता' इति कृतिः एतैः तेलुगुभाषायाम् अनूदिता। अष्टादशमहापुराणेषु एकादशपुराणानि एतैः गद्यरूपेण तेलुगुभाषायां विरचितानि इति महान् विशेषः। जगद्गुरूणां पीठाधिरोहणस्वर्णोत्सवं पुरस्कृत्य, कल्लूरि-वेङ्कटसुब्रह्मण्यदीक्षितवर्यैः 'गुरुकृपालहरी' इति त्रिशतपद्यात्मकं संस्कृतकाव्यं प्रणीतम्।

एतेषां नारायणीयग्रन्थस्य पठनात् अनेकेषां जीवितेषु बह्व्यः भगवल्लीलाः अनुभूताः। *(अस्माकं कुटुम्बे अपि अनुभूताः! वस्तुकृत्या, मम मातामहवर्यः एव अस्य पुस्तकस्य प्रचुरणार्थं धनसाहाय्यम् अकरोत्। एकदा, मम मातुलस्य शस्त्रचिकित्सा कर्तव्या आसीत्। शस्त्रचिकित्सादिनस्य पूर्वरात्रौ, मम मातामहवर्येण अस्य पुस्तकस्य सम्पूर्णपारायणं कृतम्। यदा मम मातुलः शस्त्रचिकित्साप्रकोष्ठे नीतः, तदा तस्य शस्त्रचिकित्सा अनावश्यकी अभवत्, यतो हि तेन पूर्णस्वास्थ्यं प्राप्तम्!)*

एतद्ग्रन्थस्य प्रतयः सहस्रशः विक्रीताः आन्ध्रप्रदेशे, मद्रपुर्यां च।

एवम्प्रकारेण बहवः कृतार्थाः नारायणीयस्य व्याप्त्यर्थं यथाशक्ति योगदानम् अकुर्वन्। यथा वेदान्तदेशिकवर्यैः यादवाभ्युदयमहाकाव्ये निगदितम् --

**"शक्त्या शौरिकथास्वादः स्थाने मन्दधियामपि। अमृतं यदि लभ्येत किं न गृह्येत मानवैः" ॥**

# वेदस्य सर्वार्थावभासकत्वम्

**JISHNU. V. NAMBOOTHIRI**
RESEARCH SCHOLAR
THE MADRAS SANSKRIT COLLEGE

शास्त्रयोनित्वाधिकरणसम्बन्धी अयं विचारः। शारीरकमीमांसायां प्रथमाध्याये प्रथमे पादे तृतीयम् अधिकरणं शास्त्रयोनित्वाधिकरणम्। तत्र शास्त्रयोनित्वात् इत्येकम् सूत्रम्, वर्णकद्वयं च वर्तते। तत्र आद्यवर्णके शास्त्रयोनित्वात् इति सूत्रेण ब्रह्मणः सर्वज्ञत्वं दृढीक्रियते। तच्च भाष्यकारैः प्रदर्शितम् "जगत्कारणत्वप्रदर्शनेन सर्वज्ञं ब्रह्मेत्युपक्षिप्तं तदेव द्रढयन्नाह शास्त्रयोनित्वादिति" इत्येवं अवतारिकया। तत्र च भाष्यं " महतः ऋग्वेदादेः शास्त्रस्य अनेकविद्यास्थानोपबृंहितस्य प्रदीपवत्सर्वार्थावद्योतिनः सर्वज्ञकल्पस्य योनिः कारणं ब्रह्म" इति। अत्र भाष्यकारेण इदम् उक्तं प्रतीयते। शास्त्रयोनित्वात् इति सूत्रे शास्त्रशब्देन वेदः उच्यते। वेदस्तु सर्वार्थप्रतिपादकः। तस्य सर्वार्थप्रतिपादकस्यापि स्रष्टा भवति परमेश्वरः। तस्मात् सः अवश्यं सर्वज्ञः। तत्र भाष्यकारैः प्रदर्शितं वेदस्य सर्वार्थप्रतिपादकत्वं तत् किं, कथं च सङ्गच्छते इति किञ्चित् निरूप्यते।

तत्र "सर्वं वेदप्रतिपाद्यम्" इति भाष्यकारैरुक्तं इति केचन चिन्तयन्ति। तदयुक्तम्, यतः किमिदं सर्वार्थप्रतिपादकत्वं इति वक्तव्यम्।" जगत्यस्मिन् यद्यत् पदार्थजातं अद्यावधि समुपलब्धं तत्सर्वं स्थूलरूपेण वा सूक्ष्मरूपेण वा वेदे प्रतिपादितमेव" अतः एतदेव वेदस्य सर्वार्थप्रतिपादकत्वम्। एतादृश सर्वार्थप्रतिपादकत्वं वेदे आरोप्य, लोके विद्यमानस्य सर्वपदार्थस्य वेदप्रतिपाद्यत्वं महता यत्नेन निरूपयन्ति केचित् वेदभक्ताः। तत्र मुग्धाः श्रोतारः आश्चर्यमनुभवन्ति च। परन्तु प्रेक्षावन्तः शास्त्रकाराः न अन्येषाम् केवलम् आश्चर्यं जनयितुं वास्तविकमर्थम् आच्छाद्य यथाकथञ्चिदर्थकल्पनं कर्तुं यतन्ते। तर्हि किं नाम वेदस्य सर्वार्थप्रतिपादकत्वं इत्यत्र प्राचीनानां साम्प्रदायिकानाम् कः आशयः इति किञ्चित् निरूप्यते। तत्र "सर्वं वेदप्रतिपाद्यम्" इत्यस्य पूर्वोक्ताशयस्वीकारे को दोषः इति प्रतिपादयन्ति अस्मदीय प्राचीनाचार्याः अप्पय्यदीक्षितेन्द्राः।

तथाहि वेदे सर्वं प्रतिपादितम् इत्यस्य किं तत्तद्व्यक्तित्वेन सकलम् प्रतिपादितमिति वा अर्थः, उत सामान्यरूपेण सर्वं प्रतिपादितमिति वा। नाद्यः, यदि तत्तद्व्यक्तित्वेन सकलम् वेदे प्रतिपादितम् इति वक्तव्यं तर्हि अद्यतनस्य देवदत्तस्य हस्ते स्थितानां वराटकानां संख्यापि वेदेन प्रतिपादिता इति निरूपणीयम्। न च शक्यं निरूपयितुम्, तादृशवाक्यानुपलब्धेः। ननु यत्प्रतिपादने प्रयोजनमस्ति तत्सर्वं वेदे तद्व्यक्तित्वेन प्रतिपादितमेव। अतः पूर्वोक्तदोषः वारितः, कथं इत्युक्ते देवदत्तस्य हस्ते स्थितानां वराटकानां संख्या वेदेन

प्रतिपादनीया इति नास्ति तस्य अप्रतिपादनेऽपि सर्वं प्रतिपादितम् इति प्रतिज्ञायाः उक्तपरिष्कारे सति वारितत्वात् । इति चेत् न, दिनान्तरे मया निर्मितस्य अन्येन अनुत्पादितपूर्वस्य यन्त्रविशेषस्य वेदप्रतिपाद्यत्वं वक्तव्यं स्यात् । परन्तु न वक्तुं शक्यते, तस्मात् वेदेन तत्तद्व्यक्तित्वेन सर्वं प्रतिपादितम् इति पक्षः निराकृतः । न द्वितीयः । तत्तद्व्यक्तित्वेन प्रतिपादनाभावेऽपि सामान्यरूपेण प्रतिपादितमेव । यद्यपि तद्व्यक्तित्वेन रूपेण यन्त्रस्य प्रतिपादनं नास्ति तथापि यन्त्रत्वावच्छिन्नं किञ्चित् वेदे प्रतिपादितमेव भवति इत्याशयः । तत्रोच्यते - तादृशसामान्याकारेण प्रतिपादनस्य, प्रतिपादनशब्देन व्यवहारायोगात् । सप्त पदार्थाः मया प्रतिपाद्यन्ते इति प्रतिज्ञाय " द्रव्यगुण.......... " इत्युक्त्वा मयि विरते सति, अनेन सप्त पदार्थाः प्रतिपादिताः इति यथा लोके व्यवहारो नास्ति, तद्वत् प्रकृतेऽपि वेदे प्रतिपादिताः इति व्यवहारोऽपि न सम्भवति ।

ननु वेदे सर्वमपि पदार्थजातं तत्तद्व्यक्तित्वेन विशेषरूपेण वेदे प्रतिपादितं इत्येव स्वीकुर्मः । न च तादृश वचनमपि अद्यापि नोपलभ्यत इति वाच्यम् । उभलभ्यमानासु शाखासु तन्नास्ति, तथापि " अनन्ता वै वेदाः " इति न्यायेन अनन्तानां वेदशाखानां सत्त्वावगमात् तासां सम्प्रदायविच्छेदेन अद्य अनुपलम्भेऽपि तत्र क्वचित् सर्वविषयाणां प्रतिपादनस्य सम्भावितत्वात् । तथा च देवदत्तस्य हस्ते विद्यमानवराटकानां संख्या अनुपलब्धशाखासु प्रतिपादितमेव इति कल्प्यते । नैतद्युक्तम् । भवदुक्तरीत्या स्वीकारेऽपि शास्त्रान्तरप्रतिपादितत्व संशयमात्रं भवति न तु निश्चयः । न च स्मृतिः प्रमाणमिति वाच्यं, स्मृतिकारैः तथाविधार्थस्य अपरामृष्टत्वात् ।

यद्यपि अनेकाः शाखाः लुप्ताः इति स्मृतिकारैः स्मर्यन्ते तथापि तत्र लुप्तासु शाखासु किञ्चित् प्रतिपादितमिति कल्पनं तदा स्यात् यदि वेदस्य सर्वार्थप्रतिपादकत्वे किञ्चिन्मानान्तरं वा तदप्रतिपादने किञ्चित् बाधकं वा अनुसन्धीयेत, न त्वनुसन्धीयते ।

किञ्च वेदः शब्दरूपो भवति; शब्देन च सर्वं प्रतिपादयितुं न शक्यते इति तु लोके दृष्टम् । यथा माधुर्यादि रसभेदाः अनुभवसिद्धाः तथापि तत् प्रतिपादयितुम् अशक्यम् । अतः वेदस्य सर्वार्थावभासकत्वं न वक्तुं शक्यते इति स्थितम् ।

ननु एवं सति साम्प्रदायिकोक्तिविरोधस्य कः परिहारः? भगवत्पादैः शास्त्रयोनित्वाधिकरणे "प्रदीपवत्सर्वार्थावद्योतिनः" इति विशेषणं वेदस्य उक्तम् । इति चेत् न, तस्य अन्याभिप्रायेण प्रवृत्तत्वात् वेदे सर्वं प्रतिपादितमिति तेषाम् आशयो नास्ति । अत एव " सर्वज्ञकल्पस्य " इति तैः वेदस्य

अन्यद्विशेषणं उक्तम् । तत्र ईश्वरापेक्षया स्वल्पां न्यूनतां वक्तुं कल्पप्प्रत्ययः । ईश्वरः सर्वं जानाति, वेदस्तु सर्वं न प्रकाशयति । किञ्च ईश्वरस्य सर्वज्ञत्वं साधयितुमनुमानमुपन्यस्तं तैः । ईश्वरः – वेदप्रतिपाद्यार्थतदधिकार्थविषयकज्ञानवान् – वेदकर्तृत्वात् – यथा व्याकरणादिकर्ता पाणिनिः । अतः यः वेदं स्मृत्वा उक्तवान् सः वेदविषयक तदधिक विषयक ज्ञानवान् भवति इति कृत्वा वेदस्य सर्वविषयकप्रतिपादकत्वं नास्ति ।

तर्हि भाष्योक्त " सर्वार्थावद्योतिनः " इति विशेषणस्य कोऽर्थः। उच्यते, प्रथममस्माभिः वेदस्य प्रामाण्यमिच्छद्भिः वेदेन किं प्रतिपादनीयमित्यलोचनीयम् । प्रत्यक्षादिमानान्तरेण अन्वयव्यतिरेकादिपरीक्षया वा अवगन्तुशक्यम् प्रयोजनवत् च यत् तदेव वेदेन प्रतिपादनीयम् । प्रयोजनवदित्यवश्यं वक्तव्यं, अत एव गङ्गातीरगतसिकताकणानां संख्या न प्रतिपाद्यते चेदपि नास्ति न्यूनता । तदुक्तम् –

" प्रत्यक्षेणानुमानेन यस्तूपायो न बुध्यते ।
एतं विदन्ति वेदेन तस्मात् वेदस्य हेतुता ॥ "

तथा स्थितम् द्वयमेव धर्मब्रह्मणी । अत एव धर्मब्रह्मणी वेदैकवेद्ये तदुभयमपि यच्च यावच्च वक्तव्यं तत्सर्वं सपरिकरं " यैः प्रतिपादितैः विना प्रतिपादितो न भवति तत्सर्वं " वेदेन प्रतिपाद्यते इति स्वीकारे न कोऽपि युक्तिविरोधः । इदमेव भाष्यकारैः " सर्वार्थावद्योतिनः " इति विशेषणेन सूचितम् ।

**परामृष्टग्रन्थाः**

ब्रह्मसूत्रभाष्यम् – कामकोटिकोशस्थानम् ।

रत्नप्रभा – दक्षिणाम्नाय श्रीशारदापीठम् ।

भामती – चौखाम्बा ।

# ब्रह्मजिज्ञासापदसमासविचारः

**रा. श्रीधरः**

उपाचार्यः, व्याकरणविभागः,

श्रीअहोबिलमठीयादर्शसंस्कृतमहाविद्यालयः,

मधुरान्तकम्

<u>उपोद्घातः</u>

**पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम्। सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चन॥**

इत्युक्तरीत्या पाणिनीयशास्त्रम् इदं शब्दशास्त्रं सर्वशास्त्रोपकारकं भवति इत्यत्र नास्ति विदुषां विमतिः। न्यायो वा, पूर्वोत्तरमीमांसे वा, सांख्यो वा, शास्त्राणामेषाम् अध्ययने नितराम् उपकारकं वहति व्याकरणशास्त्रम्। पद-पदार्थज्ञानाय, प्रक्रियाज्ञानाय, समासविषयकज्ञानाय च व्याकरणशास्त्रम् अत्यन्तम् उपकरोति। तमंशं मनसि निधाय भगवद्रामानुजमुनिविरचिते शारीरमीमांसेत्यभिधीयमाने उत्तरमीमांसाभाष्ये प्रथमं सूत्रं भवति अथातो ब्रह्मजिज्ञासा इति। तत्र यद्यपि बहवः विचाराः वर्तन्ते विचारयितुं तथाऽपि व्याकरणशास्त्रस्य प्राधान्यं वहति ब्रह्मजिज्ञासापदस्य समासविषयकविचारः। तं विचारं सङ्गोष्ठ्यां प्रस्तोतुम् कामये।

<u>समासः</u>

अनेकानां पदानाम् एकपदीभवनं समासः इति समसनं समासः इति च समासपदस्य व्युत्पत्तिरुच्यते। यद्वा भवतु एकाधिकपदस्य एकपदीकरणम् इति तु तात्पर्यम्। तथा च समित्युपसर्गपूर्वक असु धातोः घञ् प्रत्यये समासपदं निष्पद्यते। अयञ्च समासः अव्ययीभावः, तत्पुरुषः, बहुव्रीहिः, द्वन्द्व इति प्राधान्येन चतुर्विधः। प्रत्येकस्यापि समासस्य अवान्तरभेदाः वर्तन्ते। श्रीकौण्डभट्टविरचिते भूषणसारे समासशक्तिनिरूपणम् इति पृथग्विचार एव कृतः समासविषये। सामान्येन एतेषां चतुर्णामपि समासानां लक्षणम् एवम् अङ्गीकुर्वन्ति विद्वांसः यद् प्रायः पूर्वपदार्थप्रधानोऽव्ययीभावः, उत्तरपदार्थप्रधानो तत्पुरुषः, अन्यपदार्थप्रधानो बहुव्रीहिः, उभयपदार्थप्रधानो द्वन्द्व इति। अयञ्च वादः प्रायोवादः इति केषाञ्चित् मतम्। तथाऽपि प्रकृते इदमपि अङ्गीकुर्वन्ति इति ज्ञेयं भवति। अधुना विषये प्रविशामि।

<u>अथातो ब्रह्मजिज्ञासा</u>

श्रीमद्रामानुजमुनिविरचिते शारीरकमीमांसाभाष्ये प्रथमं सूत्रं भवति इदम्। सूत्रेऽस्मिन् त्रीणि पदानि वर्तन्ते। अथ, अतः, ब्रह्मजिज्ञासा इति। अथ शब्दस्य आनन्तर्यम् अर्थः। अत शब्दस्तु वृत्तस्य हेतुभावं विवृणोति। अविशिष्टमस्ति ब्रह्मजिज्ञासा इति पदम्। अत्र विचारः प्रारभते।

ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा। ब्रह्मण इति कर्मणि षष्ठी, कर्तृकर्मणोः कृति इति विशेषविधानात्। यद्यपि संबन्धसामान्यपरिग्रहेऽपि जिज्ञासायाः कर्मापेक्षत्वेन कर्मार्थत्वसिद्धिः। तथापि आक्षेपतः प्राप्तात् आभिधानिकस्यैव ग्राह्यत्वात् कर्मणि षष्ठी गृह्यते। न च प्रतिपदविधिना च षष्ठी न समस्यते इति कर्मणि षष्ठ्याः समासनिषेधः शङ्कनीयः। कृद्योगा च षष्ठी समस्यते इति प्रतिप्रसवसद्भावात्। इत्येवम् आचार्याणां पङ्क्तिः।

**विभक्त्यन्तरनिराकरणम्**

कर्मत्वकरणत्वादिसम्बन्धविशेषकथनसमये हि सप्तविभक्तयः विहिताः। ताश्च कर्मणि द्वितीया इत्यादिसूत्रैः विहिताः। एवञ्च कर्त्रर्थे प्रथमा, कर्मार्थे द्वितीया, करणार्थे तृतीया, सम्प्रदानार्थे चतुर्थी, अपादानार्थे पञ्चमी, सम्बन्धार्थे षष्ठी, अधिकरणार्थे सप्तमी इत्येवं विहिताः। तासु सम्बन्धसामान्ये षष्ठी शेषे इत्यनेन सूत्रेण षष्ठी विहिता वर्तते। ब्रह्मजिज्ञासा इत्यत्र प्रोक्तायाः षष्ठ्याः सामान्यविषयत्वम् आशङ्क्य कर्मविषयत्वं निश्चितं वर्तते। ब्रह्मजिज्ञासा इत्येतद् अनेकविभक्तिसाधारणत्वात् विभक्त्यन्तरसन्देहं निवारयितुं स्वयमेव विग्रहं प्रदर्शयति आचार्यः ब्रह्मणः जिज्ञासा इति। विभक्त्यन्तरेषु अनुपपत्तिर्जायते इत्येतस्मात् कारणात् षष्ठी प्रोक्ता। ब्रह्मणे जिज्ञासा इति चतुर्थीस्वीकारे ब्रह्मप्रयोजनाय जिज्ञासा इति ब्रह्मणः प्रयोजनत्वे सिद्धे सत्यपि प्रकृतिविकृतिभावाभावात् चतुर्थीविभक्तिः नोक्ता । ब्रह्मणि जिज्ञासा इति सप्तमीस्वीकारे ब्रह्मविषये जिज्ञासा इत्येव जायते न तु प्रयोजनत्वमित्यतः सप्तमीविभक्तिः नोक्ता। ब्रह्मणा जिज्ञासा इति तृतीयास्वीकारे हि शङ्कुलया खण्ड इतिवत् अत्रापि विषयत्वप्रयोजनत्वे न सिध्यतः। पञ्चमीविभक्तौ हि ब्रह्मणः जिज्ञासा इत्येव स्यादित्यतः, षष्ठ्याः अनेकार्थसद्भावाच्च कर्मणि षष्ठी इति निर्दिशति आचार्यः।

**कर्मणि षष्ठीसाधनम्**

अत्र ब्रह्मणः जिज्ञासा इति कर्मणि षष्ठी इति प्रोक्तम् आचार्यैः। तत्र पूर्वपक्षी – ब्रह्मणः जिज्ञासा इत्यत्र कर्मार्थे या षष्ठी प्रोक्ता सा न भवति, कर्मणि च इत्यनेन सूत्रेण कर्मणि षष्ठ्याः समासनिषेधः प्रोक्त भगवता पाणिनिना। तेन च प्रकृते समासाभावः। तत्र समाधानम् – कर्तृकर्मणोः कृति इति विशेषविधानात् इति। पङ्क्तेः तात्पर्यं तु – तत्र कर्मणि च इति षष्ठीसमासनिषेधस्तु उभयप्राप्तौ कर्मणि इति या षष्ठी सा न समस्यते इत्यस्य विषयः, प्रकृते तु तन्न संभवति। किञ्च अत्र कर्तृकर्मणोः विवक्षाभावात् कर्मणि च इति निषेधसूत्रं न प्रवर्तते इत्यभिप्रायः। अर्थात् आश्चर्यो गवां दोहोऽगोपेन इत्यस्मिन् वाक्ये अगोपालस्य दोहः आश्चर्यः इति कर्तरि अगोपाले षष्ठीविभक्तिः प्राप्ता, गवां दोहः इत्यत्र कर्मण्यपि गोपोत्तरषष्ठीविभक्तिः प्राप्ता। कर्त्रर्थे कर्मार्थे च षष्ठीप्राप्ता इत्यतः तत्र कर्मार्थे षष्ठीं नियमयति, कर्त्रर्थे षष्ठीं व्यावर्तयति च आचार्यः पाणिनिः। अत एव अगोपालेन इत्युक्तं भवति। अत्र हि कर्तृकर्मणोः कृति इत्यनेन सूत्रेण कर्मार्थे

षष्ठीविभक्तिः गृह्यते इत्यर्थः। सूत्रे कर्त्रर्थे षष्ठी प्रोक्तायां सत्यपि कर्मार्थषष्ठीग्रहणस्य तात्पर्यम् इदं भवति – तापत्रयेण पीडितस्यैव कर्तृत्वम्, ब्रह्मण एव कर्मत्वम् इत्यभिप्रायेण कर्मणि षष्ठी इति आचार्यस्याभिप्रायः। कर्मार्थषष्ठी स्वीकारे हि ब्रह्मणः विषयत्वप्रयोजनत्वे सिद्ध्यतः। अर्थात् कर्माणि सर्वदा विषयाः भवन्ति, ईप्सितानि च भवन्ति इत्यतः विषयत्वप्रयोजनत्वे सिद्ध्यतः।

**समस्तपदप्रयोगसाधुत्वकथनम्**

अत्र व्यस्तपदत्वेन ब्रह्मणः जिज्ञासा इति न वक्तुं शक्यते। जिज्ञासा पदस्य कुत्रापि अन्वयाभावात् ब्रह्मपदस्य द्वितीयाविभक्तिः न वक्तुं शक्यते। यतश्च कर्मणि द्वितीया इति स्वीकारे कृदर्थपदेन द्वितीयार्थकपदस्य समासो न भवति। निषेधसद्भावात्। ब्रह्म सर्वस्यापि हेतुत्वेन वर्तते इति मनसि निधाय ब्रह्मणा जिज्ञासा इति हेत्वर्थतृतीया यदि उच्येत, तर्हि ब्रह्मणः विषयत्वं न सिध्यति। किञ्च यदुक्तम् अतशब्दस्य वृत्तविशेषत्वम् आक्षेपप्राप्तम् इति तदपि ब्रह्मपदसामानधिकरण्यात् न सिध्यति। ब्रह्मणे जिज्ञासा इति तादर्थ्यचतुर्थ्यां यदि उच्यते, तर्हि प्रयोजनत्वसिद्धे सत्यपि पूर्वोक्तप्रकृतिविकृतिभावः न सिध्यति। यतश्च तादर्थ्ये समासे प्रकृतिविकृतिग्रहणं कर्तव्यम् इति कात्यायनवचनं स्मर्तव्यम्। तस्मात् चतुर्थी अपि न सिध्यति। यूपाया दारु इत्यत्र दारु प्रकृतिः यूपश्च विकृतिरित्येवं प्रकृतिविकृतिः यथा वर्तते तथा प्रकृते न वक्तुं शक्यम्। स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनरूपसंप्रदानस्यापि अत्र प्राप्तिर्नास्ति। ब्रह्मणि जिज्ञासा इति सप्तमी सत्यां विषयत्वे सत्वेऽपि प्रयोजनत्वाभावात् तदपि अयुक्तमेव इति। एवञ्च व्यस्तपदेन वक्तुमनर्हत्वात् ब्रह्मणः जिज्ञासा इति कर्मणि षष्ठीविग्रहेण ब्रह्मजिज्ञासा इत्येव वक्तव्यम् इति आचार्याणाम् आशयः।

अत्र पुनः संशयः – षष्ठी शेषे इत्यनेन सूत्रेण विहितायाः संबन्धसामान्यषष्ठ्याः स्वीकारेऽपि जिज्ञासा कर्मत्वम् अपेक्षते इति ब्रह्मणः इति षष्ठ्याः कर्मार्थत्वं सिध्यति। अर्थात् जिज्ञासा इतिपदसत्त्वात् किंविषयकजिज्ञासा इत्याक्षेपे हि ब्रह्मविषयकजिज्ञासा इति सिध्यति। एवञ्च ब्रह्मणः इति षष्ठ्याः आक्षेपात् कर्मार्थस्सिद्धे सति सति कर्तृकर्मणोः कृति इति सूत्रविहितायाः कर्मणिषष्ठ्याः स्वीकारः कुतः इति। तत्र समाधत्ते आचार्यः – षष्ठी शेषे इत्यनेन विहितया षष्ठ्या सिद्धः कर्मार्थः विलम्बेन प्राप्यते। परं कर्तृकर्मणोः कृति इत्यनेन तु साक्षात् कर्मार्थे षष्ठी गृहीता इत्यतः तादृशकथनम् उचितमेव।

**प्रतिपदविधानषष्ठीसाधनम्**

यदि पूर्वमेव सुष्ठु विचार्य कर्मार्थे षष्ठी इति निर्णीता तर्हि संबन्धसामान्यविषयत्वेन यद्यपि इत्याशङ्क्य तत्र प्रतिपदविधानषष्ठ्याः स्वीकारः किमर्थ इति प्रश्नः। अर्थात् संबन्धसामान्याङ्गीकारेऽपि जिज्ञासापदसामार्थ्यात् ब्रह्मणः कर्मत्वं सिध्यति, उपायादिब्रह्मानुबन्धिनां जिज्ञासत्वञ्च सिध्यति। किञ्च प्रतिपदविधाना च षष्ठी न समस्यते इति प्रतिपदविधानषष्ठ्याः समासनिषेधश्च सिध्ययति। तर्हि तस्य

स्वीकारः किमर्थः इत्यत्र समाधानम् उच्यते – संबन्धसामान्यपरिग्रहेऽपि इत्यत्र स्थितपरीत्युपसर्गबलेन परितो ग्रहणम् इति ब्रह्मानुबन्धिनां जिज्ञासत्वं सूच्यते। अत एव कर्मणि षष्ठी गृह्यते इत्येवोक्तं न तु परिगृह्यते इति। अर्थात् प्रधानस्य ब्रह्मणः अप्रधानस्य ब्रह्मानुबन्धिनाञ्च कर्मत्वम् आक्षेपात् सिद्ध्यति। परं प्रतिपदविधानषष्ठ्या तु प्रधानस्य आभिधानिककर्मत्वं सिद्ध्यति। अन्येषां च ब्रह्मानुबन्धिनां प्रधानसंबन्धेन आकाङ्क्षावशात् वा सिद्धस्य कर्मत्वस्य सामर्थ्यात् सिद्धिश्च अङ्गीकर्तुं शक्यते। तस्मात् प्रतिपदविधाना षष्ठी युक्ता। षष्ठी शेषे इतिविहितषष्ठीव्यतिरिक्ताः सर्वा अपि षष्ठीविभक्तयः प्रतिपदविधानषष्ठी इत्यभिधीयन्ते।

**समासनिषेधपरिहारः**

ब्रह्मणः जिज्ञासा इत्यत्र यदि प्रतिपदविधाना षष्ठी अङ्गीक्रियते तर्हि समासस्तु नैव सिद्ध्यति यतः प्रतिपदविधाना च षष्ठी न समस्यते इति वार्तिकबलात् समासाभावः इत्यस्मात् प्रकृते कर्तृकर्मणोः कृति इतिसूत्रप्रोक्ता षष्ठी समासं न प्राप्नोति इति शङ्का। तत्र समाधत्ते – तस्य च समासनिषेधस्य प्रतिप्रसवसद्भावात् समासः सिद्ध्यत्येव। अर्थात् कर्तृकर्मणोः कृति इति आदौ षष्ठ्याः समासः प्राप्तः, तस्य च प्रतिपदविधाना च षष्ठी न समस्यते इत्याक्षेपः प्रसज्यते। तस्य च कृद्योगा च षष्ठी समस्यते इति कृद्योगरूपषष्ठ्याः प्रकृते सद्भावात् समासस्तु सिद्ध्यत्येव इति समाधानम्। निष्कृष्टतया वक्तव्यञ्चेत् ज्ञोऽविदर्थस्य करणे इत्यादिसूत्रविहितषष्ठीविषयकोऽयं समासनिषेधः। तेनैव सर्पिषो ज्ञानम् इत्यत्र करणार्थषष्ठ्याः प्रतिपदविधानत्वात् तत्र समासो न भवति।

**जिज्ञासापदस्य कृदन्तत्वसमर्थनम्**

अत्र पुनः संशयः – जिज्ञासा शब्दस्तु आबन्तत्वात् अर्थात् आकारान्तस्त्रीलिङ्गशब्दत्वात् तस्य कथं वा कृदन्तत्वं युक्तम्। कृदन्ते सत्येव कृद्योगा च षष्ठी इति समासः सिद्ध्यति इति। तत्र समाधानम् – जिज्ञासा पदं हि ज्ञा धातोः सन् प्रत्यये, धातोः द्वित्वे, प्रथमज्ञा इत्यत्र ञकारस्य लोपे ज् ज्ञा इतिजाते, तत्र इडागमे च जिज्ञा इति, ततश्च सन्प्रत्ययसद्भावात् जिज्ञास इति जाते, अ प्रत्ययात् इत्यनेन सूत्रेण अ इति कृत्संज्ञकप्रत्ययः विहितः। तत्र सवर्णदीर्घे जिज्ञासा इति। अधुना एकादेशस्य दीर्घस्य अन्तादिवद्भावेन कृदन्तत्वं सिद्ध्यति इत्यतः समासोऽपि भवत्येव।

**उपसंहारः**

एवञ्च कृद्योगा च षष्ठी समस्यते इति वार्तिकबलात् जिज्ञासा इति कृदन्तेन ब्रह्मण इति कर्मार्थषष्ठ्याः समासे कृते ब्रह्मजिज्ञासा इति पदं निष्पद्यते। तथा च ब्रह्मणः जिज्ञासा इति षष्ठीसामास एव उचितः यस्य च विषयत्वं, प्रयोजनत्वञ्च सिद्ध्यति।

ISSN: 2454 - 2547

# नारायणीयस्तोत्रे कर्ममिश्रभक्तिवर्णनम्

M. RAMAPRIYAN
RESEARCH SCHOLAR
THE MADRAS SANSKRIT COLLEGE
E-MAIL : rampriyan59@gmail.com

श्रीमता मेल्पत्तूर् **नारायणभट्टतिरिणा** विरचितम् स्तोत्रकाव्यम् श्रीमन्नारायणीयम्। अयं च कविः शास्त्रेषु अपि निष्णातः अस्ति। विदुषा अनेन व्याकरणम् अच्यतपिषारडि नामक पण्डितात् अधीतम् इति सुप्रसिद्धम्। व्याकरणे एतेषां **प्रक्रियासर्वस्व** नामकः ग्रन्थः अपि सुप्रसिद्धः विराजते। न केवलं व्याकरणे कृतभूरिपरिश्रमः, अपि तु

**मीमांसादि स्वतातान्निगममविकलं माधवाचार्यवर्यात्।**
**तर्के दामोदराख्यात् अपि पदपदवीं अच्युताख्यात् बुधेन्द्रात्॥**

इति पद्यांशेन तेषां अनेकमुखा प्रतिभा ज्ञायते एव। स्वपितृचरणानां सकाशात् मीमांसाशास्त्रं अधीतम् इति प्रक्रियासर्वस्वग्रन्थस्य अन्ते विद्यमानेन पद्येनानेन ज्ञायते। एवं मानमेयोदयाख्यस्य प्रमाणप्रमेय विचारात्मकस्य मीमांसाग्रन्थस्य प्रमाणभागः अनेनैव विरचित इति विद्वद्विदितमेव। अतः एतादृशस्य अस्य कवेः दर्शनादि नैपुण्यमपि काव्ये अस्मिन् तत्र तत्र प्रतिभासते एव इति धिया मया कश्चन यत्नः विधीयते।

एष केरलदेशे निलानद्याः उत्तरतीरवर्ति तिरुनावाक्षेत्रवासि पेरुमनंग्रामे मेप्पुत्तूर्नामगृहे मातृदत्ताभिधानस्य विप्रश्रेष्ठस्य पुत्रः। अयम् अच्युतपिषारोटि सकाशात् व्याकरणादिविद्या अधीतवान् । कदाचिदेष वातरोगाभिभूतो गुरुवायुपुरेश्वरं श्रीकृष्णमस्य स्तोत्ररत्नस्य प्रत्यहमेकैकदशकनिर्माणसपर्यया परितोष्य ससन्तोषः बभूव । अथ लोकोत्तरेण कवित्वेन, पाण्डित्येन, चारित्रेण, ग्रन्थनिर्माणेन च प्रथमानोऽयम् अम्बलप्पुळपुराधिपेन राज्ञा देवनारायणेन सविशेषमुपलालितस्तदास्थानभूषणतां प्रतिपेदे । देवनारायणस्यैव चोदनयाऽनेन प्रक्रियसर्वस्वं नाम विपुलललितो व्याकरणग्रन्थः प्रणीतः, यं श्रीभट्टोजीदीक्षितः श्लाघितवानिति प्रथास्ति। अयं मीमांसायां मानमेयोदयः इति ग्रन्थः रचितवान्। अस्मिन् नारायणीये मीमांसाविषयाः बहवः उक्ताः। कर्ममिश्रभक्तिरूपवर्णनम् इति द्विनवतितमे दशके विद्यमान विषयान् प्रतिपादयामि ॥

प्रथम श्लोकः-

**वेदैः सर्वाणि कर्माणि अफलपरतया वर्णितानि इति बुद्धा**
**तानि त्वय्यर्पितान्येव हि समनुचरन् यानि नैष्कर्म्यमीश ।**
**मा भूत् वेदैः निषिद्धे कुहचिदपि मनःकर्मवाचां प्रवृत्तिः**
**दुर्वर्जं चेदवाप्तं तदपि खलु भवत्यर्पये चित्प्रकाशे ॥ १ ॥**

अस्य अर्थः – अत्र वेदे विहितानि सर्वाण्यपि ज्योतिष्टोमादीनि कर्माणि फलसाधनत्वाभावेनैव विहितानि। फलश्रुतिः श्रूयते खलु इत्युक्ते यागे प्रवृत्तिः एव तस्याः श्रुतेः प्रयोजनम् । विहितानि सर्वाण्यपि कर्माणि त्वय्येव समर्प्य कर्मानुष्ठानम् करवाणि। वेदैः निषिद्धेषु कर्मसु क्वचिदपि मनसा, कर्मणा, वाचा वा मम प्रवृत्तिः मा भूत् । तादृश दुष्कर्मानुष्ठान स्थितिः आगता चेत् तत् कर्मापि भवत्यर्पयामि । इति श्लोकार्थः ॥

द्वितीय श्लोकः-

**यस्त्वन्यः कर्मयोगस्तव भजनमयस्तत्र चाभीष्टमूर्तिं**
**हृद्यां सत्त्वैकरूपां दृषदि हृदि मृदि क्वापि व भावयित्वा।**
**पुष्पैर्गन्धैर्निवेद्यैरपि च विरचितैः शक्तितो भक्तिपूतैः**
**नित्यं वर्यां सपर्यां विदधदयि विभो त्वत्प्रसादं भजेयम्॥ २ ॥**

यस्त्वन्यः नाम वेदविहितकर्माणि विहाय तान्त्रिकमयः यथा भजनमयः पूजाविशेषः इत्यादि आशु त्वत्प्रसादजनकः अस्माकं अभीष्टमूर्तिं नारायणम् दृषदि हृदि मृदि वा सम्भाव्य, यथोक्तम्-

**शैली दारुमयी लौही लेप्या लेख्या च सैकती।**
**मनोमयी मणिमयी प्रतिमाष्टविधा स्मृता॥**

तव मूर्तिं धर्ममार्गेण यथाशक्ति सम्पादित पत्रपुष्पादिभिः श्रद्धया वर्यां अभ्यर्च्य त्वत्प्रसादं प्राप्नवानि॥ इति श्लोकार्थः॥

तृतीय श्लोकः-

**स्त्रीशूद्राः त्वत्कथादि श्रवणविरहिता आसतां ते दयार्हाः**
**त्वत्पादासन्नयातान् द्विजकुलजनुषो हन्त शोचाम्यशान्तान्।**
**वृत्त्यर्थं ते यजन्तो बहुकथितमपि त्वामनाकर्णयन्तो**
**दृप्ता विद्याभिजातैः किमुत विदधते तादृशं मा कृथा माम्॥ ३ ॥**

स्त्रीशूद्राः भगवत्कथा भगवन्नामसङ्कीर्तनम् इत्यादि सत्कार्याणि त्यक्तवन्तः किञ्च तेषाम् अध्ययनादि कर्मानुष्ठाने अधिकारोपि नास्ति । अत इदम् सर्वम् त्यक्तं चेदपि दयार्हाः ते भवन्तु हन्त । भवत्पादसमीपस्थितान् शान्तिम् अप्राप्तवतः ब्राह्मणक्षत्रियवैश्यान् विचिन्त्य अहं क्लेशं अनुभवामि । कुतः इत् चेत् त्रैवर्णिकाः वृत्त्यर्थं यागादि अनुष्ठानं कारयन्ति न तु विहितत्वात् कुर्वन्ति। किञ्च शास्त्रेण बहु उपदिष्टं चेदपि तत् सर्वं श्रवणमात्रेण त्यक्त्वा नाम मनसि न विधाय दृप्ताः त्रैवर्णिकाः 'विद्यामदधनमदाभिचारमद' इत्युक्तरीत्या मदमात्रेण एते अभिचारसज्जननिन्दाद्यपि कुर्वन्ति। मां तादृशं मा कुरु कृष्ण ॥

चतुर्थश्लोकः-

**पापोऽयं कृष्ण रामेत्यभिलपति निजं गूहितुं दुश्चरित्रं**
**निर्लज्जस्यास्य वाचा बहुतर कथनीयानि मे विघ्नितानि ।**
**भ्राता मे वन्ध्यशीलो भजति किल सदा विष्णुं इत्थं बुधांस्ते**
**निन्दन्त्युच्चैर्हसन्ति त्वयि निहितमतीन् तादृशं मा कृथा माम्॥४॥**

हे कृष्ण! तत्कृत अपचारान् गूहितुं राम कृष्ण इति प्रजल्पति लज्जारहितः अयं, वाचा मम बहुवक्तव्यानि विघ्नितानि, निष्फलं कर्म करोति, यः मम भ्राता सदा विष्णुभजनमेव कार्यं इति विचिन्त्य तव भक्तान् उच्चैः परिहासयन्ति । मां तादृशं मा कुरु ॥

पञ्चमश्लोकः –

**श्वेतच्छायं कृते त्वां मुनिवरवपुषं प्रीणयन्ते तपोभि-**
**स्त्रेतायां स्रुक्स्रुवाद्यङ्कितमरुणतनुं यज्ञरूपं यजन्ते ।**
**सेवन्ते तन्त्रमार्गैर्विलसदरिगदं द्वापरे श्यामलाङ्गं**
**नीलं सङ्कीर्तनाद्यैरिह कलिसमये मानुषास्त्वां भजन्ते ॥५॥**

मनुष्याः कृतयुगे श्वेतवर्णमुनिवरवपुषं मुनिशब्दस्य ब्रह्मचारी उच्यते । त्वां तपोभिः तृप्यन्ते । त्रेतायुगे अरुणवर्णरूपं त्वां सृक्स्रुवादि अङ्ककलापैः सह यागहोमदानवेदोक्तकर्मभिः इष्ट्वा तृप्यन्ते । द्वापरयुगे श्यामलवर्णरूपं भगवन्तं मन्त्रतन्त्रपूजाद्रव्यविशिष्टपूजादिभिः तृप्यन्ते । अस्मिन् कलियुगे नीलरूपं त्वां नामसङ्कीर्तनभजनादिभिः मनुष्याः भगवन्तं तृप्यन्ते ।

षष्ठश्लोकः –

**सोऽयं कालेयकालो जयति मुररिपो यत्र सङ्कीर्तनाद्यै-**
**र्निर्यत्नैरेव मार्गैरखिलद न चिरात्त्वत्प्रसादं भजन्ते ।**

**जातास्त्रेताकृतादावपि हि किल कलौ सम्भवं कामयन्ते**
**दैवात्तत्रैव जातान् विषयविषरसैर्मा विभो वञ्चयास्मान् ॥६॥**

अयं वर्तमानकलियुगः इतरेभ्यः युगेभ्यः उत्कृष्टः भवति । कथं इति चेत् मोक्षप्राप्तिः सामान्यप्रयत्नेनैव नामसङ्कीर्तनादि सुलभमार्गेण मोक्षः प्राप्तुं शक्यते इति । अतः कृतत्रेताद्वापरयुगे जनितमनुष्याः अपि अस्मिन् युगे जननं प्राप्तुमिच्छन्ति । भवतः अनुग्रहेण अस्मिन् युगे एव जनितवतः अस्मान् भगवदन्यविषयैः पापकर्मभिः मा वञ्चय ।

सप्तमश्लोकः –

**भक्तास्तावत्कलौ स्युर्द्रमिलभुवि ततो भूरिशस्तत्र चोच्चैः**
**कावेरीं ताम्रपर्णीमनु किल कृतमालां च पुण्यां प्रतीचीम् ।**
**हा मामप्येतदन्तर्भवमपि च विभो किञ्चिदञ्चद्रसं त्व-**
**य्याशापाशैर्निबध्य भ्रमय न भगवन् पूरय त्वन्निषेवाम् ॥७॥**

अस्मिन् कलियुगे भक्ताः अधिकाः वसन्ति । तेषु द्रविडदेशे एव अधिकाः जीवन्ति । तस्मिन्नपि कावेरी ताम्रपर्णी कृतमाला ( वैगै ) इति पुण्यनद्यः इतोपि याः नद्यः द्रविडदेशे प्रतीचीमुखं प्रवहन्ति तस्मिन्तीरे एव बहवः भक्ताः निवसन्ति । हे प्रभो ! एतादृश क्षेत्रे जननं प्राप्तवन्तं मां च आशापाशैः निबध्य संसारसागरे मा प्रवर्तय । हे भगवन् सर्वदा तव कैङ्कर्येषु अस्मान् नियुङ्क्ष्व ॥

अष्टमश्लोकः –

**दृष्ट्वा धर्मद्रुहं तं कलिमपकरुणं प्राङ्महीक्षित् परीक्षित्**
**हन्तुं व्याकृष्टखड्गोऽपि न विनिहतवान् सारवेदी गुणांशात् ।**
**त्वत्सेवाद्याशु सिध्येदसदिह न तथा त्वत्परे चैष भीरु-**
**र्यत्तु प्रागेव रोगादिभिरपहरते तत्र हा शिक्षयैनम् ॥८॥**

पूर्वस्मिन् काले परीक्षित् राज्यसमये सः राजा एकं दृष्टवान् । सः कारुण्यरहितः धर्मविरोधिं कलिं दृष्ट्वा तं हन्तुं व्याकृष्टखड्गः अपि सः कलिः दृष्टुं वेदान्तसारवदी सद्गुणांशाः बहु आसन् इति कृत्वा तान् न मारितवान् । अस्मिन् कलियुगे भगवद्सेवा इत्यादि आशु फलदायी । परन्तु पापकार्यं तथा न । अयं कलिपुरुषः तस्य भक्तस्य सविधे भीतः अपि भवति ।

ISSN: 2454 - 2547

नवमश्लोकः –

**गङ्गा गीता च गायत्र्यपि च तुलसिका गोपिकाचन्दनं तत्**

**सालग्रामाभिपूजा परपुरुष तथैकादशी नामवर्णाः ।**

**एतान्यष्टाप्ययत्नान्यपि कलिसमये त्वत्प्रसादप्रवृध्या**

**क्षिप्रं मुक्तिप्रदानीत्यभिदधुः ऋषयस्तेषु मां सज्जयेथाः ॥९॥**

हे परमपुरुष ! अस्मिन् कलियुगे एतान्यष्टकर्माणि बहुप्रयत्नाभावनैव भवत्प्रसादवृध्या शीघ्रमेव मुक्तिं प्रयच्छन्तीति महर्षिभिः उपदिष्टानि । कानि एतानि कर्माणि इति चेत् गङ्गाप्रवाहस्नानं, भगवद्गीताध्ययनं, गायत्रीमहामन्त्रजपः, तुलस्या भगवदर्चनं, ललाटे गोपीचन्दनादि ऊर्ध्वपुण्ड्रधारणं, सालग्रामाराधनं, तथा एकादशी व्रतं, भगवन्नामसङ्कीर्तनम् इति अष्टौ कर्माणि कलियुगे मोक्षदायकानि । तेषु कर्मसु मम प्रवृत्तिः भवेत् इति प्रार्थये ॥

दशमश्लोकः –

**देवर्षीणां पितृणामपि न पुनः ऋणी किङ्करो वा स भूमन्**

**योऽसौ सर्वात्मना त्वां शरणमुपगतस्सर्वकृत्यानि हित्वा ।**

**तस्योत्पन्नं विकर्माप्यखिलमपनुदस्येव चित्तस्थितस्त्वं**

**तन्मे पापोत्थतापान् पवनपुरपते रुन्धि भक्तिं प्रणीयाः ॥१०॥**

देवानां ऋषीणां पितृणामपि यथा अभक्तऋणी अधर्मणो भवति । अत एव तदपाकरणाय यज्ञाध्ययनपुत्रोत्पादनादि तेन कर्तव्यं इति तेषां किङ्करश्च भवति । तथा च स्मृतिः " हीनजातिं परिक्षीणमृणार्थं कर्म कारयेत् इति । सः भक्तः पुनर्ऋणी किङ्करो वा न भवति । तत्र हेतुमाह – योसाविति । यः पुरुषः सर्वात्मना सर्वभावेन त्वां शरणमुपगतः सर्वकृत्यानि विहितसकलकर्माणि हित्वा । ननु तर्हि सर्वात्मना निषिद्धकर्मणः अपरिहार्यत्वात् प्रायश्चित्तादि कर्म कर्तव्यं, नेत्याः " तस्येति" । विकर्मनिषिद्धकर्मणः फलं तस्य त्वां शरणं गतस्य तावन्न सम्भवति । यदि प्रमादादिना भवेत् तर्हि तदपि इति अपि शब्दार्थः । अखिलं निरवशेषं अपनुदसि नाशयसि । ननु नास्य पापक्षयार्थं भगवदुपासनं, अत आह- चित्तस्थितस्त्वमिति । न हि वस्तुशक्तिरर्थितामपेक्षते कार्योत्पादनाय, यथा ह्यौषधं फलार्थिनाम् अफलार्थनामपि अविशेषेण आरोग्यादि जनयति तथेति भावः । तत्तस्मात् यस्माच्चित्तस्थः पापमपनुदसि, पापोत्थान् पापकर्मजनितान् तापान् दुरितानि रुन्धि वारय । भक्तिं प्रणीयाः अनपायिनीं कृषीष्ठाः ॥ इति ॥

# श्रीमन्नारायणीये रसभावोन्मीलनम्

**एस् माधवी,**
शोधच्छात्रा,मद्रपुरी संस्कृतमहाविद्यालयः, चेन्नै
Email – smadhavi263@gmail.com

**सान्द्रानन्दावबोधात्मकमनुपमितं कालदेशावधिभ्यां**
**निर्मुक्तं नित्यमुक्तं निगमशतसहस्रेण निर्भास्यमानम्।**
**अस्पष्टं दृष्टमात्रे पुनरुरुपुरुषार्थात्मकं ब्रह्म तत्त्वं**
**तत्तावद्भाति साक्षाद्गुरुपवनपुरे हन्त भाग्यं जनानाम्॥**

श्रीमन्नारायणीयाख्यं काव्यं दार्शनिककविवरश्रीनारायणभट्टतिरिणा विरचितं श्रीगुरुवातपुरीशायार्पितं भक्तिप्रधानं काव्यम्। श्रीमद्भागवतसारभूतोऽयं ग्रन्थः सहस्रपद्यात्मकः यद्यपि भक्तिभावप्रधानः तथाऽपि ग्रन्थकृता स्वीयया अप्रतिमया प्रतिभया वहुषु स्थलेषु अन्येषां रसानां भावानां च समावेशनं कृतमस्ति।

ध्वनिकारैः श्रीमदानन्दवर्द्धनाचार्यैः अतिविशालप्रबन्धे महाभारते कौरवपाण्डवयुद्धवर्णने वीररसस्य, योद्धॄणां परस्परं क्रोधावेगाभ्यां च रौद्रस्य, युद्धानन्तरं वीरगतिं प्राप्तानां शवेभ्यः निर्गतयोः रक्तदुर्गन्धयोः, तत्र सञ्चरतां शृगालकाकादीनां च वर्णने वीभत्सस्य, सत्यवती-कुन्ती-अम्बाऽम्बिका-अम्बालिका-द्रौपदी-रुक्मिण्यादीनां सुन्दरीणां हरणविवाहादिप्रसङ्गे शृङ्गारस्य चेति एतेषां सर्वेषां परिपोषेऽनुभूयमानेऽपि शान्तरस एव मुख्यः अङ्गिरसः इति सम्यक् प्रतिपादितम्।

भारते वृष्णिपाण्डवविरसावसानवैमनस्यदायिनीं समाप्तिमुपनिबध्नता महामुनिना स्वप्रबन्धस्य प्राधान्येन वैराग्यजननतात्पर्यं दर्शयता मोक्षलक्षणपुरुषार्थः शान्तरसश्च मुख्यतया विवक्षाविषयत्वेन सूचितः। पाण्डवादिचरितं यत्कीर्त्यते, तत्सर्वमवसानविरसम् अविद्याप्रपञ्चरूपञ्च। परमार्थसत्यस्वरूपस्तु भगवान् वासुदेव एवेति काव्ये स्थिताः अन्ये रसाः, अन्यानि तत्त्वानि च समर्थयन्ति।

ISSN: 2454 - 2547

तथैव श्रीमन्नारायणीये भगवतो महिमानं वर्णयता कविना बहुषु प्रसङ्गेषु अनेकेषां रसानां भावानाञ्च समावेशनं कृतम्। तत्र भगवतः श्रीमन्नारायणस्य विभवावताराणां वर्णनप्रसङ्गे दृश्यमानान् रसान् भावांश्च अहं यथाशक्ति प्रतिपादयामि।

द्वात्रिंशे दशके मत्स्यावतारिणो विष्णोर्वर्णनमस्ति। मत्स्यावतारप्रसङ्गे कविना अद्भुतरसः अतिसुन्दरतया प्रयुक्तः।

**क्षिप्तं जले त्वां चकितं विलोक्य निन्येऽम्बुपात्रेण मुनिः स्वगेहम्।**

**स्वल्पैरहोभिः कलशीं च कूपं वापीं सरश्चानशिषे विभो त्वम्॥**

अत्र मत्स्यमूर्तिः भगवान् महाविष्णुः आलम्बनं, तस्य मत्स्याकृतेः सञ्चलनं, चकितविलोकनं स्वगृहनयनञ्चानुभावौ, धृतिहर्षादयो व्यभिचारिणः। एतेभ्यः सर्वेभ्यः विस्मयस्थायिभावः अद्भुतरसः अस्मासु पाठकेषु व्यज्यते।

**स्वतुङ्गशृङ्गक्षतवक्षसं तं निपात्य दैत्यं निगमान् गृहीत्वा।**

**विरिञ्चये प्रीतहृदे ददानः प्रभञ्जनागारपते प्रपायाः॥**

पद्येऽस्मिन् हयग्रीवासुरालम्बनः, तत्कृतनिगमापहरणोद्दीपितः, तद्वक्षक्षत्यानुभावितः भगवद्गतः क्रोधः यद्यपि सामाजिकेष्वभिव्यज्यते रौद्ररसरूपेण, परन्तु 'प्रभञ्जनागारपते प्रपायाः' इति प्रार्थनया स रौद्रः भक्तिभावस्याङ्गरूपेण भक्तिं समर्थयति।

अमृतमथनवर्णनप्रसङ्गे सप्तविंशे दशके कूर्मवर्ष्मधारिणः भगवतः विष्णोः वर्णनं कृतम् –

**वज्रातिस्थिरतरकर्परेण विष्णो विस्तारात्परिगतलक्षयोजनेन।**

**अम्भोधेः कुहरगतेन वर्ष्मणा त्वं निर्मग्नं क्षितिधरनाथमुन्निनेथ॥**

कूर्मवर्ष्मधारिभगवदालम्बनः, तच्छरीरविस्तरेण तत्कृतपर्वतोन्नयनेन चोद्दीपितः, तत्स्तवनेनानुभावितः, आक्षिप्तेन हर्षेण सहकृतः, विस्मयस्थायिभावः अद्भुतरसोऽस्मासु व्यज्यते।

द्वादशे त्रयोदशे च दशके क्रमेण वराहावतारस्य हिरण्याक्षवधस्य च वर्णनं विहितम्। तत्र द्वादशे दशके –

**ऊर्ध्वप्रसारिपरिधूम्रविधूतरोमा प्रोक्षिप्तवालधिरवाङ्मुखघोरघोणः।**

**तूर्णप्रदीर्णजलदः परिघूर्णदक्ष्णा स्तोतॄन्मुनीन् शिशिरयन्नवतेरिथ त्वम्॥**

**अन्तर्जलं तदनु सङ्कुलनक्रचक्रं भ्राम्यत्तिमिङ्गिलकुलं कलुषोर्मिमालम्।**

**आविश्य भीषणरवेण रसातलस्थान् आकम्पयन् वसुमतीमगवेषयस्त्वम्॥**

इति पद्ययोः वराहरूपिणः भगवतः आकृतेः तच्चेष्टायाश्च वर्णनं कृतम्। वराहमूर्तेः रोमावल्याः, वालधेः उत्क्षेपणस्य अधोमुखनासिकायाः तत्कृतजलदानां विनाशस्य च वर्णनेन वराहमूर्त्त्यालम्बनः भयानकः अस्मासु केवलानामुद्दीपनविभावानामेव चमत्कारवशात् आविर्भवति।

त्रयोदशे दशके हिरण्याक्षवधश्चैवं वर्णितः –

**भवच्चक्रज्योतिष्कणलवनिपातेन विधुते ततो मायाचक्रे विततघनरोषान्धमनसम्।**
**गरिष्ठाभिर्मुष्टिप्रहृतिभिरभिघ्नन्तमसुरं कराग्रेण स्वेन श्रवणपदमूले निरवधीः॥**

अत्र हिरण्याक्षालम्बनः तत्कृतवसुमतीहरण-मुष्टिप्रहार-घातादिभिः उद्दीपितः तन्मारणेनानुभावितः रौद्ररसः अभिव्यज्यते। अत्र मदगर्वोग्रतादयः व्यभिचारिणः रौद्रस्य समर्थकाः आक्षिप्यन्ते।

श्रीमन्नारायणीये पञ्चविंशे दशके नृसिंहावतारवर्णनं कृतमस्ति। तत्र रौद्रभयानक-बीभत्सादीनामतिसुन्दरं प्रकटनं कृतमस्ति। यथा –

**स्तम्भे घट्टयतो हिरण्यकशिपोः कर्णौ समाचूर्णय-**
**न्नाघूर्णज्जगदण्डकुण्डकुहरो घोरस्तवाभूद्रवः।**
**श्रुत्वा यं किल दैत्यराजहृदये पूर्वं कदाप्यश्रुतं**
**कम्पः कश्चन सम्पपात चलितोऽप्यम्भोजभूर्विष्टरात्॥**

अत्र नृसिंहाकृतेः भगवतः नादः, न तु भगवान् , आलम्बनः। तन्नादकृतदैत्यकर्णचूर्णनजगदाघूर्णनादयः उद्दीपनं, तच्छ्रवणेन जातः कम्पः अनुभावः, विस्मयचिन्तावितर्कादयः व्यभिचारिभावाः। एवं भयस्थायिभावः भयानकरसोऽभिव्यज्यते।

**भ्राम्यन्तं दितिजाधमं पुनरपि प्रोद्गृह्य दोर्भ्यां जवात्**
**द्वारेऽथोरुयुगे निपात्य नखरान् व्युत्खाय वक्षोभुवि।**
**निर्भिन्दन्नधिगर्भनिर्भरगलद्रक्ताम्बु बद्धोत्सवं**
**पायम्पायमुदैरयो बहुजगत्संहारि सिंहारवान्॥**

अत्र हिरण्यकशिपुरालम्बनम्। तत्कृतगदासहितभ्रमणखड्गविद्याप्रदर्शनादयः उद्दीपनम्, स्वोरुयुगे निपातनं, वक्षसो नखैर्निर्भेदनं, रक्तपानं, सिंहनादोद्घोषणश्चेत्येते अनुभावाः। उग्रतौत्सुक्यामर्षावेगादयश्च व्यभिचारिभावाः। एतेभ्यो मिलित्वा रौद्ररसः अभिव्यज्यते।

ग्रन्थेऽस्मिन् त्रिंशे एकत्रिंशे चेत्युभयोर्दशकयोः वामनावतारस्य त्रिविक्रमावतारस्य च वर्णनं कृतम्। तत्र महाबलेः यज्ञे याचकाय सर्वमपि दातुमुत्साहः अतिसुन्दरतया वर्णितः। यथा – शुक्राचार्येणास्मै वटवे न किञ्चिद्देयमिति रुध्यमाने बलौ तस्योक्तिः –

**याचत्येवं यदि स भगवान् पूर्णकामोऽस्मि सोऽहं**

**दास्याम्येव स्थिरमिति वदन् काव्यशप्तोऽपि दैत्यः।**

**विन्ध्यावल्या निजदयितया दत्तपाद्याय तुभ्यं**

**चित्रं चित्रं सकलमपि स प्रार्पयत्तोयपूर्वम्॥**

अत्र याचकः परमात्मा आलम्बनं, तत्कृतात्यल्पपरिमाणपादत्रितयमितभूमियाचनञ्चोद्दीपनं, भगवते नूनं दास्याम्येवेत्युक्तिः दयितया सह पाद्यदानञ्चेत्यनुभावौ, हर्षधृतिमत्यादयः व्यभिचारिणः। एतेभ्यो मिलितेभ्यः उत्साहस्थायिभावः वीररसः सम्यगभिव्यज्यते।

षड्त्रिंशे दशके परशुरामावतारिणो भगवतश्चित्रं वर्णितमास्ते। तत्र पितृवधेन क्षुभितस्य भृगुपतेश्चित्रणमेवं कृतम् –

**भूयोऽमर्षितहेहयात्मजगणैस्ताते हते रेणुका–**

**माघ्नानां हृदये निरीक्ष्य बहुशो घोरां प्रतिज्ञां वहन्।**

**ध्यानानीतरथायुधस्त्वमकृथा विप्रद्रुहः क्षत्रियान्**

**दिक्चक्रेषु कुठारयन् विशिखयन् निःक्षत्रियां मेदिनीम्॥**

अत्र कार्तवीर्यार्जुनस्य पुत्राः आलम्बनम्। तैः कृतः पितृवधः मात्रा रेणुकया कृतः स्वहृदये घातश्चोद्दीपनविभावौ। धरां क्षत्रियविहीनां करिष्यामीति प्रतिज्ञाकरणम्, अनन्तरमायुधानुपनीय क्षत्रियमारणञ्चेति अनुभावाः। अमर्षगर्वधृत्यावेगादयः व्यभिचारिणः। क्रोधस्थायिभावः रौद्रः सामाजिकेष्वभिव्यज्यते।

चतुस्त्रिंशपञ्चत्रिंशदशकयोः श्रीरामचरितं वर्णितमस्ति। युद्धवर्णनप्रसङ्गे पद्यमिदं प्रोक्तम् –

**सौमित्रिस्त्वत्र शक्तिप्रहृतिगलदसुर्वातजानीतशैल-**

**घ्राणात्प्राणानुपेतो व्यकृणुत कुसृतिश्लाघिनं मेघनादम्।**

**मायाक्षोभेषु वैभीषणवचनहृतस्तम्भनः कुम्भकर्णं**

**सम्प्राप्तं कम्पितोर्वीतलमखिलचमूभक्षिणं व्यक्षिणोस्त्वम्॥**

सौमित्रेः श्रीरामस्य चोत्साहः कविना सुष्ठु प्रदर्शितः। प्रथमं मेघनादालम्बनः, तस्य गर्वेण स्वमायाश्लाघनेन चोद्दीपितः, मेघनादमारणेन चानुभावितः, लक्ष्मणाश्रयः उत्साहः वीररसरूपेणाभिव्यज्यते।

पुनः कुम्भकर्णालम्बनः, कुम्भकर्णकृतनिखिलसैन्यभक्षणभूमिकम्पनादिभिरुद्दीपितः श्रीरामाश्रयः उत्साहः पाठकेषु वीररसत्वेनाभिव्यज्यते। दीर्घसमासप्रयोगस्तु अत्र अत्यन्तं रसपरिपोषकतया सुन्दरो भाति।

सप्तत्रिंशात् दशकादारभ्य एकोननवतिदशकपर्यन्तम् अतिविस्तरेण भगवतः वातपुराधीशस्य श्रीकृष्णरूपिणः लीलाः वर्णिताः विद्यन्ते। तत्र गोपिकानां चेष्टावर्णनप्रसङ्गे श्रृङ्गारस्य प्राकट्यं यथा –

**स्विन्नसन्नतनुवल्लरी तदनु काऽपि नाम पशुपाङ्गना**

**कान्तमंसमवलम्बते स्म तव तान्तिभारमुकुलेक्षणा।**

**काचिदाचलितकुन्तला नवपटीरसारनवसौरभं**

**वञ्चनेन तव सञ्चुचुम्ब भुजमञ्चितोरुपुलकाङ्कुरम्॥**

श्रीकृष्णालम्बनः, श्रीकृष्णस्य सुन्दरमूर्तिशरीरलेपनसौरभाद्युद्दीपितः, श्रीकृष्णांसावलम्बनभुजचुम्बनाद्यनुभावितः, मोहश्रमालस्यादिसञ्चारिभिः परिपोषितः सम्भोगश्रृङ्गारः भक्तेः अङ्गत्वेन सम्यग्भाति।

ग्रन्थे प्रपञ्चस्य सृष्टिपालनप्रभृतीनां बहूनां विषयाणां चित्रणं कृतम्। तत्र परमानन्दसौख्यं तु गुरुपवनेशस्य सन्निधौ भगवतः कटाक्षेण, तद्वक्त्रदर्शनेन, चन्दनपीतवस्त्राद्यलङ्कृततद्वपुषो ध्यानेन, तच्चरणाम्बुजद्वये शरणार्थनयैव लभ्यते इति ग्रन्थसारभूतोंऽशः अन्तिमे शतके भक्तिभावपूर्णैः पद्यैः स्पष्टं प्रतीयते।

**योगीन्द्राणां त्वदङ्गेष्वधिकसुमधुरं मुक्तिभाजां निवासो**

**भक्तानां कामवर्षद्युतरुकिसलयं नाथ ते पादमूलम्।**

**नित्यं चित्तस्थितं मे पवनपुरपते कृष्ण कारुण्यसिन्धो**

**हृत्वा निश्शेषतापान् प्रदिशतु परमानन्दसन्दोहलक्ष्मीम्॥**

एवंरूपेण नित्यं चित्तस्थितं गुरुपवनेशपादमूलम् अशेषतापापहरणपूर्वकं परमानन्दसन्दोहमुक्तिसुखं ददात्विति अन्ते वायुपुरेशं प्रार्थयते।

ISSN: 2454 - 2547

# श्रीमन्नारायणीये श्रीरामचरितम्

**सुदर्शनः. के**

शोधच्छात्रः, मद्रपुरीसंस्कृतमहाविद्यालयः, चेन्नै

**उपोद्घातः**

प्रस्तुतो भक्तिप्रधानोऽयं "श्रीमन्नारायणीयम्" इत्याख्यग्रन्थः मेल्पुत्तूर् **श्रीमन्नारायणभट्टपादेन** विरचितः स्ववातरोगनिवारणाय। अत्र श्रीमद्भागवतार्थसंग्रहस्वरूपाणां पद्यानां संख्या सहस्रोत्तरतां प्रपेदे, समग्रोऽपि भागवतार्थः तेषु यथाक्रमं संगृहीतश्च अभूत् । तावत् अहो तस्य चक्षुषोः लक्ष्यताम् अवाप किल भगवान् पुण्डरीकाक्षः। अन्त्यदशकस्य आदिमेन "**अग्रे पश्यामि तेजोनिबिडतरकलायवलीलोभनीयं पीयूषाप्लावितोऽहम्** "इत्यादिपद्येन भगवतः मरुत्पुराधीशस्य साक्षात्कारं खलु सानन्दभरं कविरपि निर्दिशति स्म। पवनपुरपतये मालारूपेण, समर्पयितुं ग्रथितोऽयं ग्रन्थः। तादृशमालायाः मध्ये विद्यमानरत्नवत् श्रीमद्रामचरितं भवति ।

**स्वीकृतविषयप्रस्तावनम्**

तादृशे नारायणीये दशकद्वयेन श्रीरामचरित्रं वर्ण्यते । अयं च ग्रन्थः श्रीमद्भागवतपुराणस्य अनुवादग्रन्थः इति सर्वविदितमेव । श्रीमद्भागवतपुराणेऽपि नवमस्कन्धे दशम-एकादशाध्याययोः श्रीरामचरित्रं वर्णितमस्ति, परन्तु महान् भेदो दृश्यते अत्र । श्रीमद्भागवतपुराणे साक्षात् भगवतः श्रीरामस्य अवतारः वर्ण्यते। भगवान् श्रीरामः दशरथस्य पुत्रो भूत्वा

**"गुर्वर्थे त्यक्तराज्यो व्यचरदनुवनं पद्मपद्भ्यां प्रियायाः**
**पाणिस्पर्शाक्षमाभ्यां मृजितपथरुजो यो हरीन्द्रानुजाभ्याम् ।**
**वैरूप्याच्छूर्पणख्याः प्रियविरह रुषाऽरोपितभ्रूविजृम्भ-**
**त्रस्ताब्धिर्बद्धसेतुः खलदवदहनः कोसलेन्द्रोऽवतान्नः** ॥{श्रीमद्भागवते ०९-१०-०४}

गुर्वर्थे त्यक्तराज्यः दशरथार्थे अथवा गुरुभूतं सत्यं निमित्तीकृत्य राज्यं त्यक्त्वा वनं गतवान् इत्यारभ्य अन्ते सर्वविधसंहारादिकं कृत्वा पुनः कोशलदेशं संप्राप्य राजरूपेण विलसति स्म। तादृशः भगवान् श्रीरामचन्द्रः अस्मान् अवतात् इति प्रार्थनारूपेण एकस्मिन्नेव पद्ये रामचरितं कथितं भवति। पुनः कथां वक्तुम् इति प्रारब्धवान् श्रीशुकः विश्वामित्रस्य यागसंरक्षणमारभ्य सीतायाः विवाहः, अनन्तरमनेके विषयाः उच्यन्ते, परन्तु अतीव अल्परूपेण । एवं प्रथमाध्याये अर्थात् दशमाध्याये एव रामपट्टाभिषेकपर्यन्तम् आनीतमस्ति ।

तत्र च वाल्मीकिरामायणात् श्रीमद्भागवतरामायणस्य च भेदो दृश्यते। तस्मादपि भिद्यते श्रीमन्नारायणीयम् । तत्र श्रीमद्भागवतपुराणे दशमाध्याये एव कथा निरूपिता। एवं एकादशाध्याये सीतारामयोः विरहः वर्ण्यते नाम वियोगः । पुनः भगवतः श्रीरामस्य वैकुण्ठगमनमिति वर्णनं कृत्वा, तस्यैव भगवतः श्रीरामस्य यशः अत्र श्लाघ्यते । एवं रूपेण अन्ते एकादशाध्याये,

**"तस्मिन् स भगवान् रामः स्निग्धया प्रिययेष्टया।**

**रेमे स्वाराममधीराणामृषभः सीतया किल ॥**

**बुभुजे च यथाकालं कामान् धर्ममपीडयन् ।**

**वर्षपूगान् बहून् नृणामभिध्याताङ्घ्रिपल्लवः ॥** {श्रीमद्भागवते ०९-१०-३५,३६}

अन्ते सीतया सह श्रीरामः रेमे इति वर्ण्यते भागवते । परं तस्यैव भागवतस्य अनुवादग्रन्थरूपेण विद्यमाने अस्मिन् ग्रन्थे एवं श्रीमद्रामायणमनुसृत्य श्रीभट्टत्रिणा रामकथा वर्णिता । तत्र दशकद्वये संपूर्णरामकथा वर्णिता अस्ति, अर्थात् उत्तरकाण्डस्यापि कथा अत्र स्वीकृतास्ति । तयोः दशकयोः मध्ये चतुस्त्रिंशे दशके प्रथमं पद्यमेवं वर्तते

**"गीर्वाणैरर्थ्यमानो दशमुखनिधनं कोसलेष्वृश्यशृङ्गे**

**पुत्रीयामिष्टिमिष्ट्वा ददुषि दशरथक्ष्माभृते पायसाग्र्यम् ।**

**तद्भुक्त्या तत्पुरन्ध्रीष्वपि तिसृषु समं जातगर्भासु जतो**

**रामस्त्वं लक्ष्मणेन स्वयमथ भरतेनापि शत्रुघ्ननाम्ना ॥** इति। {श्रीमन्नारायणीये ३४-०१}

प्रायशः रामायणकथायां कविषु नैके मतभेदाः दृश्यन्ते । तत्र पायसविभजनकाले दशरथः कथं दिव्यपायसं विभक्तवान् इति जिज्ञासायामनेकैः कविभिः भिन्न भिन्न मार्गः स्वीकृतः प्रदर्शितः च । अत्र नारायण भट्टत्रिणा, " तद्भुक्त्या तत्पुरन्ध्रीष्वपि तिसृषु समं जातगर्भासु जातः " इति, पायसाग्र्यं दत्तवान् दशरथः। तर्हि तत्र विभजन विषये चर्चा एव मास्तु इति कृत्वा पायसाग्र्यं दत्तवान् दशरथः इति उच्यते ।

एवमेव रामस्य अवतारादारभ्य प्रथमे दशके सुग्रीव सख्यपर्यन्तम्, अर्थात् आरण्यकाण्ड संपूर्तिं यावत् प्रथमे दशके वर्णनं कृत्वा, पञ्चत्रिंशे दशके

**नीतः सुग्रीवमैत्रीं तदनु हनुमता दुन्दुभेः कायमुच्चैः**

**क्षिप्त्वाऽङ्गुष्ठेन भूयो लुलुविथ युगपत् पत्रिणा सप्त सालान् ।**

**हत्वा सुग्रीवघातोद्यतमतुलबलं वालिनं व्याजवृत्त्या**

**वर्षावेलामनैषीर्विरहतरलितस्त्वं मतङ्गाश्रमान्ते ॥** {श्रीमन्नारायणीये ३५-०१}

नीतः सुग्रीव.... कायमुच्चैः "इति हनुमतः सङ्गेन सुग्रीवस्य मैत्रीं प्राप्तः भगवान् श्रीरामः नानाविधकार्येण तस्मिन् सुग्रीवे विश्वासमुत्पाद्य, वालिनं हत्वा, सुग्रीवं वानरराजत्वेन अभ्यषिञ्चदिति कथाऽऽरम्यते। तदारभ्य आन्तं श्रीरामचन्द्रस्य स्वर्गारोहणपर्यन्तं वर्णितमस्ति ।

एतादृशे, अस्मिन् रामचरित्रे केचन विषयाः मया अत्र प्रतिपाद्यन्ते। व्याकरणशास्त्रे पण्डितोऽयं कविः बहुत्र अतीव नूतनशब्दान् एवं क्लिष्टशब्दांश्च प्रयुक्तवानस्ति । एवमेव ओजोगुणभरितं भवति इदं काव्यम्। अतः दीर्घसमासप्रायत्वं एवमेव कठिनवर्णानां प्रयोगः इत्यादि दृश्यते तत्र । यथा,

**मारीचं द्रावयित्वा मखशिरसि शरैरन्यरक्षांसि निघ्नन्**
**कल्यां कुर्वन्नहल्यां पथि पदरजसा प्राप्य वैदेहगेहम् ।**
**भिन्दानश्चान्द्रचूडं धनुरवनिसुतामिन्दिरामेव लब्ध्वा**
**राज्यं प्रातिष्ठथास्त्वं त्रिभिरपि च समं भ्रातृवीरैः सदारैः ॥** {श्रीमन्नारायणीये ३४-०३}

पद्येऽस्मिन् "मारीचं द्रावयित्वा मखशिरसि " इति मकारस्य " शरैरन्यरक्षांसि निघ्नन् " इति काठिन्यं प्रदर्शयन्, " कल्यां कुर्वन्नहल्याम् " इति ककारस्य एवं " कल्याम् अहल्यामिति " ल्या वर्णद्वयस्य, " पथि पदरजसा प्राप्य " इति पकारस्य, " वैदेहगेहम् " अत्र ईह, ईह इति ।" भिन्दानश्चान्द्रचूडं धनुरवनिसुतामिन्दिरामेव लब्ध्वा " इत्यत्र चान्द्रचूड इति किञ्चित् काठिन्यं प्रदर्श्य, सदारैः भ्रातृवीरैः राज्यं प्रातिष्ठथाः, हे राम ! त्वमेव सदारैः भ्रातृवीरैः, नाम गुरुवातपुराधीशं दृष्ट्वा, स एव रामः इति स्वीकृत्य तं रामं दृष्ट्वा उच्यते, अन्यैः भरतलक्ष्मणशत्रुघ्नादिभिः सह त्वं राज्यं प्रातिष्ठथाः इति साक्षात् कृष्णस्य पुरतः रामस्यैव संबोधनत्वेन अत्र उच्यते।

एवमिदं काव्यं तथा अस्ति, गुरुवातपुराधीशः एव अत्र नायकः। यथा श्रीमद्रामायणे श्रीरामचन्द्रः नायकः तथा श्रीमद्भागवतपुराणे संपूर्णतया कश्चन नायकः इति न । तथापि श्रीमन्नारायणीये भगवान् गुरुवातपुराधीशः एव नायकत्वेन स्वीकृत्य वर्णितः तथा इदं काव्यं निर्मितमस्ति । अतः आरम्भात् सर्वं भगवता श्रीकृष्णेनैव कृतमिति एतैः वर्ण्यते, अतः यथा नाटकेषु साक्षात् संबोधनं भवति, तथैव अत्रापि श्रीकृष्णं दृष्ट्वा त्वयैव एवं कृतं, त्वयैव इदं कृतं, त्वया एव लीला आरचिता इति साक्षात् संभाषण रूपेण काव्यनिर्माणम् कृतमस्ति इति ग्रन्थस्यास्य वैशिष्ट्यमस्ति ।

तथा च अत्र स्वीकृतं चरित्रं तावत् भगवतः श्रीरामचन्द्रस्यैव, तथापि स च श्रीरामचन्द्रः साक्षात् श्रीकृष्णः एव इति वर्ण्यते। श्रीमद्भगवतपुराणे "गुर्वर्थे त्यक्त राज्य...." इति कथा प्रारब्धा अस्ति श्रीशुकाचार्येण । तद्वदेव अत्रापि -

**"तातोक्त्या यातुकामो वनमनुजवधूसंयुतश्चापधारः**
**पौरानारुध्य मार्गे गुहनिलयगतस्त्वं जटाचीरधारी।**

**नावा संतीर्य गंगामधिपदवि पुनस्तं भरद्वाजमारा-**

**न्नत्वा तद्वाक्यहेतोरतिसुखमवसश्चित्रकूटे गिरीन्द्रे॥** {श्रीमन्नारायणीये ३४-०५}

इत्यत्र तातस्य उक्त्या वनं गन्तुं सः उद्युक्तवान् इत्यारभ्य, एकस्मिन्नेव पद्ये चित्रकूटपर्यन्तं श्रीरामचरित्रं वर्णितं भवति । इदं च अस्मिन् काव्ये वैशिष्ट्यमस्ति, विशिष्टतया वाल्मीकि महर्षिणा चतुर्विंशतिसहस्त्रसंख्याकैः पद्यैः या कथा निरूपिता, सा कथा अध्यायद्वयेन, प्रायशः शताधिकैः श्लोकैः श्रीमद्भागवतपुराणे वर्णिताऽस्ति । परन्तु अस्मिन् नारायणीये केवलं विंशतिश्लोकैः संपूर्णकथा साक्षात्कृता वर्तते। अतः काव्येऽस्मिन् ओजोगुणः इति प्राचीनसंप्रदायानुरोधेन, तथा च यत्र महान् विषयः अतीव सूक्ष्मरूपेणोच्यते सोऽपि ओजोगुणः इति स्वीकृतः अस्ति। तद्वदत्र महान्तं विषयमधिकृत्य एकेनैव पद्येन तस्य वर्णनं कृतमस्ति, अत्र ओजोगुणस्य द्विधा वर्णनं कर्तुं शक्यते। वर्णानां काठिन्यं, समासबाहुल्यं, दीर्घसमासत्वम् इत्यादिकारणेनापि ओजोगुणः भवति । स्वीकृते पञ्चमे पद्ये "तातोक्त्या....धारः" इति, भगवता श्रीरामेण वनं गन्तुं यदा उद्युक्तं तदानीं स्वकीयपत्न्या सीतया एवं लक्ष्मणेन साकं सः, स्वीकृतधनुः, गमनमार्गे एव पुरात् आगतान् सर्वान् जनान् निषिध्य, गुहस्य स्थानं संप्राप्य जटाचीरादिकं धृत्वा, अत्र अयं विषयः पद्येषु अन्वयः भिन्नरूपेण भवितुमर्हति परन्तु श्रीभट्टत्रिणा तेनैव क्रमेण पद्यनिर्माणं क्रियते, इति विशेषः भवति। तथाच "जटाचीरधारी" इति पूर्वमनुक्त्वा, गुहस्य स्थानं संप्राप्य जटाचीरधारी इति, श्रीरामस्य विशेषणं दीयते । तर्हि तत्रैव भगवता रामेण जटाचीरादिकं धृतमिति इतिहासकथा। अतः, तत्र इदं पदं नियुज्यते "जटाचीरधारी" इति । तदनन्तरं गुहस्य साहाय्येन गङ्गानद्याः संतरणं कृत्वा समीपे एव विद्यमानं भरद्वाजऋषिं नत्वा तद्वाक्येन, चित्रकूटे पर्वते सः सुखेन अवसत्, इति वर्ण्यते । तर्हि नानाविध सर्गेषु बहुभिः सर्गैः या कथा श्रीमद्रामायणे वर्णिता सा कथा अत्र एकस्मिन्नेव पद्ये वर्णिता अस्तीति कृत्वा ओजोगुणः द्रष्टुं शक्यते ।

एवं तदनन्तरं विद्यमानानि बहूनि पद्यानि तथैव कथायाः अनुसरणं कुर्वन्ति, चतुस्त्रिंशे दशके जटायुषः सीतावृत्तान्तावगमं कृत्वा, नाम सीतायाः हरणादनन्तरं जटायुषः मुखात् सीतायाः हरणं जातमिति ज्ञात्वा सीतायाः अन्वेषणार्थं भगवान् श्रीरामः प्रस्थितः इति । तदनन्तरं भगवतः श्रीरामस्य शबरीदर्शनं हनुमत्सङ्गमं च चतुस्त्रिंशे दशके समाप्यते ।

**नीतः सुग्रीवमैत्रीं तदनु हनुमता दुन्दुभेः कायमुच्चैः**

**क्षिप्त्वाऽङ्गुष्ठेन भूयो लुलुविथ युगपत् पत्रिणा सप्त सालान् ।**

**हत्वा सुग्रीवघातोद्यतमतुलबलं वालिनं व्याजवृत्त्या**

**वर्षावेलामनैषीर्विरहतरलितस्त्वं मतङ्गाश्रमान्ते ॥** {श्रीमन्नारायणीये ३५-०१}

इत्यारभ्य किष्किन्धा काण्डस्य विषयः आरभ्यते अर्थात् श्रीरामस्य सुग्रीवसख्यं, वालिवधादिकम् उक्त्वा, श्रीमद्रामायणे यः काण्डः सुप्रसिद्धो वर्तते सुन्दरकाण्डमिति तस्य काण्डस्य संक्षेपरूपेण कथनं अत्र कृतं भवति कविना यत्।

**त्वद्वार्ताकर्णनोद्यद्गुरुदुरुजवसम्पातिसम्पातिवाक्य-**

**प्रोत्तीर्णार्णोधिरन्तर्नगरि जनकजां वीक्ष्य दत्वाङ्गुलीयम् ।**

**प्रक्षुद्योद्यानमक्षक्षपणचणरणः सोढबन्धो दशास्यं**

**दृष्ट्वा प्लुष्ट्वा च लङ्कां झटिति स हनुमान् मौलिरत्नं ददौ ते ॥ ३॥** {श्रीमन्नारायणीये ३५-०३}

इति एकस्मिन्नेव पद्ये हनुमान् तत्र गत्वा श्रीरामेण दत्तमङ्गुलीयकं प्रदाय, प्रत्ययार्थं सीतया दत्तं चूडामणिम् दत्तवान्, इति कथा वर्णिता । एवं बहुत्र अस्माभिः तस्य संक्षेप कथने विद्यमानं चातुर्यं द्रष्टुं शक्यते । एवमेव, अन्ते श्रीमद्वाल्मीकिरामायणमनुसृत्य सीतायाः अग्निप्रवेशः वर्णितः तथैव अत्रापि कविना अग्निप्रवेशवर्णनं क्रियते यच्च श्रीमद्भागवतपुराणे नास्ति ।श्रीमद्भागवते साक्षात् भगवान् श्रीरामचन्द्र : अशोकवनं गत्वा सीतायाः अवस्थां दृष्ट्वा तां स्वीकरोति इति वर्ण्यते, परं वाल्मीकिवचः प्रमाणत्वेन स्वीकृत्य भट्टत्रिणा अत्र

**"गृह्णन् जम्भारिसम्प्रेषितरथकवचौ रावणेनाभियुध्यन्**

**ब्रह्मास्त्रेणास्य भिन्दन् गलततिमबलामग्निशुद्धां प्रगृह्णन् ।**

**देवश्रेणीवरोज्जीवितसमरमृतैरक्षतैर्ऋक्षसङ्घै-**

**र्लङ्काभर्त्रा च साकं निजनगरमगाः सप्रियः पुष्पकेण ॥ "** {श्रीमन्नारायणीये ३५-०७}

इत्यत्र रावणस्य सर्वाणि शिरांसि ब्रह्मास्त्रेण भिन्दन्, श्रीरामः सीतां अग्नौ शुद्धीकृत्य विभीषणेन एवं अन्यैः वानरैः साकं पुष्पकविमानेन अयोध्यां गतवान् इति वर्ण्यते । तथा च अत्र प्रसिद्धभागवतात् भेदो दृश्यते, परन्तु इयं च कथा रामायणे अस्ति अतः "अग्निशुद्धां प्रगृह्णन्" इति सीतायाः अग्निप्रवेशः अत्र वर्णितः । अग्रिमे पद्ये यदा श्रीरामचन्द्रेण सीतायाः त्यागः क्रियते, तदानीं कविः तन्मयो भूत्वा इदं भगवता श्रीरामचन्द्रेण क्रियमाणं कर्म असह्यं भवति इति स्वकीयं सहृदयत्वं प्रदर्शयति

**प्रीतो दिव्याभिषेकैरयुतसमधिकान् वत्सरान् पर्यरंसी-**

**मैथिल्यां पापवाचा शिव शिव किल तां गर्भिणीमभ्यहासीः।**

**शत्रुघ्नेनार्दयित्वा लवणनिशिचरं प्रार्दयः शूद्रपाशं**

**तावद्वाल्मीकिगेहे कृतवसतिरुपासूत सीता सुतौ ते ॥** {श्रीमन्नारायणीये ३५-०८}

देवैः क्रियमाणैः अभिषेकैः दशसहस्राधिकान् संवत्सरान् त्वया सीतया साकं रमितं परन्तु गर्भिणीं मैथिलीं पापवाचा त्वं त्यक्तवान् खलु इति यदा कविः साक्षात् गुरुवातपुराधीशस्य अग्रे वदन् आसीत्,

तदानीं, इमं विषयं वक्तुं सः अशक्तः एवं पदप्रयोगं करोति "मैथिल्या पापवाचा शिव शिव किल ताम्" यथा "शान्तं पापं" इत्यादि वाक्यानि दृश्येषु उच्यते तद्वत् कविः अत्र "शिव शिव" इति "अयं विषयः वक्तुं अयोग्यः" अतः तादृशं अमङ्गलं त्वया कृतं खलु इति स्वकीयं अभिप्रायं अत्र प्रदर्शयन् इदं काव्यं मया क्रियते इत्यपि विस्मृत्य तन्मयो भूत्वा "शिव शिव" शब्दादिकं प्रयुनक्ति, तेन च तस्य सहृदयत्वं ज्ञायते ।

किञ्च अग्रे कथां उक्त्वा, अन्ते नवमपद्ये। "साकं नाकं प्रयातो निजपदमगमो देव वैकुण्ठमाद्यम्" इति सर्वैः साकं स्वर्गलोकं गत्वा पुनः ततः वैकुण्ठं गतवान् भगवान् श्रीरामचन्द्रः इति कथा संपूर्णतया वर्णयित्वा, पुनः श्रीमद्भागवतपुराणोक्तं विषयं वक्तुकामः नारायणभट्टपादः श्रीमद्भागवते पञ्चमस्कन्धे किंपुरुषवर्षस्य वर्णनासन्दर्भे

**"मर्त्यावतारस्त्विह मर्त्यशिक्षणं रक्षोवधायैव न केवलं विभोः ।**
**कुतोऽन्यथा स्याद्रमतः स्व आत्मनः सीताकृतानि व्यसनानीश्वरस्य ॥** {श्रीमद्भागवते ०५-१९-०५}

इति पद्ये श्रीशुकाचार्येण रामस्य सीताविरहादि दुःखं किमपि भवितुं नार्हति। यद्यपि श्रीरामः मनुष्यरूपेण आगतः इतिकृत्वा दुःखादिकम् अनुभूतवान्, परन्तु तत् सर्वं विडम्बनमेव। यतः भगवान् खलु रामचन्द्रः। तर्हि मर्त्यरूपेण अवतारः केवलं मनुष्याणां शिक्षणार्थमेव। यथा नटः स्वकीयं दुस्थितिं प्रकटयति परन्तु वास्तविकरूपेण न अनुभवति तथैव भगवन् श्रीरामः पत्नीविरहादिकं सर्वं दुःखं अनुभूतवत् प्रदर्शितवान्। यतो हि ईश्वरस्य दुःखादिकं भवितुं नार्हति, इति तत्र भगवतः श्रीरामस्य हनूमन्मुखेन स्तोत्रं क्रियते । तद्वदेव श्रीमन्नारायणीयेऽपि तमेव पद्यं मनसि कृत्वा अत्र कविः एवं वदति अन्ते कविः एवं श्रीरामचरितं समापयति -

**सोऽयं मर्त्यावतारस्तव खलु नियतं मर्त्यशिक्षार्थमेवं**
**विश्लेषार्तिर्निरागस्त्यजनमपि भवेत् कामधर्मातिसक्त्या ।**
**नो चेत् स्वात्मानुभूतेः क्व नु तव मनसो विक्रिया चक्रपाणे**
**स त्वं सत्त्वैकमूर्ते पवनपुरपते व्याधुनु व्याधितापान् ॥** {श्रीमन्नारायणीये ३५-१०}

इत्यत्र सीतायाः विरहेण या आर्तिः जाता, एवं इदं सर्वमपि वास्तविकतया भगवतः न भवति, केवलं मनुष्यशिक्षणार्थमेव । स्वात्मारामस्य नित्यपूर्णस्य भगवतः कामक्रोधादिकं सर्वं भवितुं नार्हति इत्युक्त्वा, परं अन्ते स्वकीयं व्याधिं दूरीकर्तुं प्रार्थनां करोति "व्याधुनु व्याधितापान्" इति ।

### उपसंहारः

एवंरूपेण अत्र दशकद्वयेऽपि भगवतः श्रीरामचन्द्रस्य, यथाश्रीमद्रामायणं तथा वर्णयित्वा, मध्ये श्रीमद्भागवतस्यापि संस्कारेण ईषद् भेदम्, एवमेव सादृश्यं च प्रदर्शयन् श्रीनारायणभट्टत्रिः अस्मिन् नारायणीयग्रन्थे दशकद्वयेन रामचरित्रम् अतीव सम्यक् निरूपितवान् ॥

ISSN: 2454 - 2547

# श्रीमन्नारायणीये श्रीनृसिंहचरितम्

**सतीशः. सु**

शोधच्छात्रः, मद्रपुरीसंस्कृतमहाविद्यालयः, चेन्नै

**उपोद्घातः**

नारायणभट्टत्रिणा श्रीमद्भागवतपुराणमाधारीकृत्य विरचिते अस्मिन् नारायणीये ग्रन्थे चतुर्विंशतिदशके एवं पञ्चविंशतिदशके च प्रह्लादचरित्रम् अथवा भगवतः नरसिंहावतारचरित्रम् वर्णितं भवति। श्रीमद्भागवतपुराणे सप्तमे स्कन्धे अध्यायदशकेन नरसिंहभक्तप्रह्लादयोः चरित्रचित्रणं कृतं भवति। तदेव अत्र विंशतिपद्यैः कविणा वर्णितं भवति। अत्र प्रथमं तावत् अस्मिन् दशकद्वये विद्यमानकथा अस्माभिः ज्ञातव्या वर्तते। अत्र च कीदृशी रीतिः कविणा आधृता भवतीति द्रष्टव्या वर्तते। विंशतिश्लोकेषु सम्पूर्णचरित्रवर्णनं कृतमस्ति। अतः दशाध्यायेषु विद्यमानानां विषयाणां केवलं श्लोकविंशतौ यदि क्रियते, तदानीं तत्र नैपुण्यम् अपेक्षितं भवति। किञ्च कुत्रापि चरित्रचित्रणम् अन्यूनीकृतं भवति। श्रीमद्भागवते याः स्तुतयः भवन्ति, एवम् उपदेशादिकं च वर्तते तेषाम् अतीवसूक्ष्मरूपेण कथनं कृतमस्ति। परन्तु चरित्रचित्रणम् तावत् अतिविस्तृतं कृतं भवति। एवम् एकोऽपि विषयः न त्यक्तः। तथा अत्र आचार्यस्य वर्णनं भवति।

**प्रस्तुतविषयकथनम् -**

अस्मिन् श्रीमन्नारायणीये चतुर्विंशतिदशके प्रथमे पद्ये –

**हिरण्याक्षे पोत्रिप्रवरवपुषा देव भवता हते शोकक्रोधग्लपितधृतिरेतस्य सहजः।**

**हिरण्यप्रारम्भः कशिपुरमराराति सदसि प्रतिज्ञामातेने तव किल वधार्थं मुररिपो॥ [२४-०१]**

इति आरभ्य हिरण्यकशिपुः स्वकीयभ्रातुः हिरण्याक्षस्य भगवता कृतं वधम् असहमानः तस्यैव भगवतः नारायणस्य मारणार्थं प्रतिज्ञां कृत्वा तपः चरितवान् इति अत्र कथा प्रारभ्यते। अत्र हिरण्याक्षस्य वधः वराहमूर्तिणा भगवता नारायणेन कृतः वर्तते। तादृश शोकम् असहमानः अयं हिरणयकशिपुः तस्य वधार्थं नाम नारायणवधार्थं तपः कर्तुं प्रारभत इति प्रथमे पद्ये आचार्येण उक्तमस्ति।

तदनन्तरं द्वितीये पद्ये सः वरं लब्धवान्। साक्षात् भगवतः ब्रह्मणः सकाशात् वरं संप्राप्य सुरनरमृगाद्यैः अनिधनं मारणं नाम देवैः मनुष्यैः मृगपक्षादिभिः अनिधनं मारणं यथा न स्यात् तथा किञ्चित् विशिष्टं वरं स्वीकृत्य साक्षात् वैकुण्ठमेव अर्थात् भगवतः नारायणस्य यत् लीलास्थानं भवति तत्रैव गतवान् इति वर्ण्यते। एवमेव तत्र गत्वापि भगवान् न दृष्टः। वैकुण्ठे नास्तीति चिन्तयन् सः हिरण्यकशिपुः

भगवान् भीतः इति मत्वा पुनः स्वर्गराज्यं कुर्वन् आसीत्। तदानीं तस्य प्रह्लादप्रभृतयः पुत्राः उत्पन्नाः । तेषु प्रह्लादः अतीव भक्तिमान् आसीत्। तस्य कारणमपि अत्र आचार्येण वर्णितं भवति। तद्यथा –

**ततोऽस्य प्रह्लादः समजनि सुतो गर्भवसतौ मुनेर्वीणापाणेरधिगतभवद्भक्तिमहिमा।**
**स वै जात्या दैत्यः शिशुरपि समेत्य त्वयि रतिं गतस्त्वद्भक्तानां वरद परमोदाहरणताम्॥**
**[२४-०४]**

अर्थात् गर्भवसतौ यदा प्रह्लादः कयाधोः गर्भे वासमकरोत् तदानीं नारदऋषेः कृपया भवद्भक्तिमहिमानं ज्ञातवान् इति अत्र प्रह्लादस्य गुरुः कः इति उक्तः भवति। अनन्तरं –

**सुरारीणां हास्यं तव चरणदास्यं निजसुते स दृष्ट्वा दुष्टात्मा गुरुभिरशिशिक्षच्चिरममुम्।**
**गुरुप्रोक्तं चासाविदमिदमभद्राय दृढमित्यपाकुर्वन् सर्वं तव चरणभक्त्यैव ववृधे॥ [२४-०५]**

इति सुरारीणां हास्यं असुराणां विषये तस्य प्रह्लादस्य उपेक्षाम् एवं विष्णोः चरणदास्यं च दृष्ट्वा कुपितः अयं हिरण्यकशिपुः तथा गुरुमुखात् स्वकीयं मतं शिक्षयामास। परन्तु अयं प्रह्लादः गुरुवचसां गौरवं न दत्तवान्। यतः तदीयचरणभक्त्या अर्थात् भगवति विद्यमानभक्त्या सः कुमार्गं न स्वीकृतवान्।

यथा भागवते -

**प्रह्लादानूच्यतां तात स्वधीतं किञ्चिदुत्तमम्। कालेनैतावताऽऽयुष्मन् यदशिक्षद् गुरोर्भवान्॥**
**(भागवते ७-५-२२)** इति उच्यते , तान्येव पदानि स्वीकृत्य अत्रैव अपि

**अधीतेषु श्रेष्ठं किमिति परिपृष्टेऽथ तनये भवद्भक्तिं वर्यामभिगदति पर्याकुलधृतिः।**
**गुरुभ्यो रोषित्वा सहजमतिरस्येत्यभिविदन् वधोपायानमस्मिन् व्यतनुत भवद्पादशरणे॥**
**[२४-०६]**

इति आचार्येण उक्तमस्ति। त्वया यत् पठितम् तत्र अधीतेषु श्रेष्ठं किमिति यदा हिरण्यकशिपुः पृष्टवान् तदानीं **भवद्भक्तिं वर्यामभिगदति पर्याकुलधृतिः** इति विष्णुपादसेवा विष्णुभक्तिरेव उत्तमा वर्तते इति प्रह्लादः अवोचत्। गुरुभ्यः अपि कोपं कृत्वा तथा तस्य विष्णुभक्तिं दृष्ट्वा अतिकुपितः हिरण्यकशिपुः प्रह्लादस्य वधाय नानाविधान् उपायान् कृतवान्।

श्रीमद्भागवते ते च विषयाः अति विस्तारेण उक्ताः भवन्ति। अत्रापि तच्च विषयाः आचार्येण उच्यते। तद्यथा -

**दिग्गजैर्दन्तशूकैश्च अभिचारावपातनैः। मायाभिः सन्निरोधैश्च गरधानैरभोजनैः ॥** (भा.०७-०५-४३)
**हिमवाय्वग्निसलिलैः पर्वताक्रमणैरपि । न शशाक यदा हन्तुमपपामसुरः सुतम्।**
**चिन्तां दीर्घतमां प्राप्तस्तत्कर्तुं नाभ्यपद्यत॥** (भागवते ०७-०५-४४)

इति भवति। अत्रापि च आचार्येण तं विषयमपि उच्यते। तद्यथा

ISSN: 2454 - 2547

**स शूलैराविद्धः सुबहुमथितो दिग्गजगणैर्महासर्पैर्दष्टोऽप्यनशनगराहारविद्रुतः ।**

**गिरीन्द्रावक्षिप्तोऽप्यहह परमात्मन्नयि विभो त्वयि न्यस्तात्मत्वात् किमपि न निपीडामभजत॥**

**[२४-०७]**

एवं नानाविध दु;खान् उत्पातितवान् हिरण्यकशिपुः। परं तु शूलैः,दिग्गजैः, सर्पैः पीडितः अपि प्रह्लादः दुःखं न प्राप्तवान् । यतो हि त्वद्भक्तिकारणात् प्रह्लादः दुःखं नानुभूतवन्। परं हिरण्यकशिपुः सन्देहयुक्तः जातः । यथा -

**ततः शङ्काविष्टः स पुनरतिदुष्टोऽस्य जनको गुरूक्त्या तद्गेहे किल वरुणपाशैस्तमरुणत् ।**

**गुरोश्चासान्निध्ये पुनरनुगान् दैत्यतनयान् भवद्भक्तेस्तत्वं परममपि विज्ञानमशिषत् ॥ [२४-०८]**

स्वकीयः वरः स्वपुत्रे फलति वा इति सन्देहयुक्तः हिरण्यकशिपुः वरुणपाशेन तं प्रह्लादं बध्नीतवान् आसीत्। पुनः गुरोः सान्निध्ये तं प्रह्लदं प्रेषितवानासीत् । एकदा यदा प्रह्लादः पितृसमीपं आगतवान्,

**पिता श्रृण्वन् बालप्रकरमखिलं त्वत्स्तुतिपरं**

**रुषाऽन्ध प्राहैनं कुलहतक कस्ते बलमिति ।**

**बलं मे वैकुण्ठस्तव च जगतां चापि स बलं**

**स एव त्रैलोक्यं सकलमिति धीरोऽयमगदीत्॥ [२४-०९]**

सर्वानपि असुरबालकान् यदा भक्तिमार्गे प्रचोदयामास प्रह्लादः तदा तं विषयं श्रुत्वा कुपितः हिरण्यकशिपुः ,"कुलहतक कस्ते बलमिति " ते बलं कः भवेत्? किं भवति? " इति प्रश्नं करोति। तदानीं प्रह्लादः निर्भयेण, "बलं मे वैकुण्ठः" वैकुण्ठनाथः श्रीमन्नारायण एव मम बलं भवति न केवलं मम अपि च तव च जगतां बलं भवति । तवाऽपि बलं स एव विष्णुः, जगतामपि बलं सः एव विष्णुः इति यदा धैर्येण उक्तवान्, तदानीं हिरण्यकशिपुः "**अरे क्वासौ क्वासौ सकलजगदात्मा हरिरिति**" त्वया उच्यमानः हरिः कुत्र वर्तते इति अतीव कोपेन पृष्टवान्।

**प्रभिन्ते स्म स्तम्भम् चलितकरवालो दितिसुतः।**

**अतः पश्चात् विष्णो न हि वदितुमीशोस्मि सहसा**

**कृपात्मन् विश्वात्मन् पवनपुरवासिन् मृडय माम् ॥ [२४-१०]**

अत्र विद्यमानम् स्तम्भम् ताडितवान् ।तदानीम् भगवान् श्री नृसिंहः तस्मात् स्तम्भात् आविर्बभूव इति वक्तुम् अशक्तः कविः एवम् अत्र वर्णनम् करोति। तद्यथा "अतः पश्चात् विष्णो न हि वदितुमीशोस्मि सहसा" इति। भगवतः नरसिंहस्य ध्यानेन निमग्नः अयम् नारायणभट्टद्रिः स्तम्भताडनात् पश्चात् यत् जातम् तत् झटिति वक्तुम् अहम् अशक्त; वर्ते इति उक्त्वा , " हे कृपात्मन् ! हे विश्वात्मन् ! पवनपुरवासिन्

मृडय माम् " इति गुरुवातपुरीशम् दृष्ट्वा कृपया माम् रक्षेति प्रार्थनया साकम् प्रथमम् दशकम् पूरयति। तथा द्वितीये दशके

**"स्तम्भे घट्टयतो हिरण्यकशिपोः कर्णौ समाचूर्णय-**

**न्नाघूर्णज्जगदण्डकुण्डकुहरो घोरस्तवाभूद्रवः ।**

**श्रुत्वा यं किल दैत्यराजहृदये पूर्वं कदाप्यश्रुतं**

**कम्पः कश्चन संपपात चलितोऽप्यम्भोजभूर्विष्टरात् ॥ [२५-०१]**

यः स्तम्भम् ताडितवान् तादृशस्य हिरण्यकशिपोः कर्णौ चूर्णयन् एवम् बहूनि कार्याणि कुर्वन् भगवान् नरसिंहः प्रादुर्बभूव इति उक्त्वा भगवतः नरसिंहरूपम् वर्णयति।

**"तप्तस्वर्णसवर्णघूर्णदतिरूक्षाक्षं सटाकेसर-**

**प्रोत्कम्पप्रनिकुम्पिताम्बरमहो जीयात्तवेदं वपुः ।**

**व्यात्तव्याप्तमहादरीसखमुखं खड्गोग्रवल्गन्महा-**

**जिह्वानिर्गमदृश्यमानसुमानसुमहादंष्ट्रायुगोड्डामरम् ॥" [२५-०३]**

एवं वर्णयति । तादृशभयङ्कररूपेणागतं भगवन्तं नारायणं नृसिंहं दृष्ट्वाऽपि ,

**"नूनं विष्णुरयं निहन्म्यमुमिति भ्राम्यद्गदाभीषणं**

**दैत्येन्द्रं समुपवाद्रवन्तमधृथा दोर्भ्यां पृथुभ्याममुम्।**

**वीरो निर्गलितोऽथ खड्गफलकौ गृण्हन् विचित्रश्रमान्**

**व्यावृन्वन् पुनरापपात भुवन्यासोद्यतं त्वामहो ॥" [२५-०५]**

इदानीमेव तं हिरण्यकशिपुं मारयामि इति यः विष्णुः आगतवान् तं दोर्भ्यां पृथुभ्यां आदृताः । अनन्तरं व्यावृण्वन् इत्यस्मिन् पद्ये भगवाण् नरसिम्हेण तादृशं अर्थात् ,

**भ्राम्यन्तं दितिजाधमं पुनरपि प्रोद्गृह्य दोर्भ्यां जवान्**

**द्वारेऽथोरुयुगे निपात्य नखरान् व्युत्खाय वक्षोभुवि।**

**निर्भिन्दन्नधिगर्भरगलद्रक्ताम्बु बद्धोत्सवं**

**पायं पायमुदैरयो बहुजगत्स्म्हारिसिंहारवान्॥ [२५-०६]**

इति सः हिरण्यकशिपुः यादृश वरः तेन प्राप्तः, तस्य वरस्य भङ्गं विना तस्य हिरण्यकशिपोः वधः कारितः भवति। श्रीमद्भागवतपुराणे ,

**" सत्यं विधातुं निजभृत्यभाषितं व्याप्तिं च भूतेष्वखिलेषु चात्मनः।**

**अदृश्यतात् भूतरूपमुद्वहन् स्तम्भे सभायाम् न मृगम् न मानुषम् ॥" (भागवते ०७-०८-१८)**

इति भगवन्तम् नृसिंहं वर्णयति । अत्र स्वकीयभृत्यस्य भाषणं सत्यम् कर्तुम् भगवान् तत्र आविर्बभूव । अत्र निजभृत्यः कः इति नानाविध व्याख्याः भवन्ति । साक्षात् अत्र कथा प्रस्तावे निजभृत्यः प्रह्लादः भवति। तस्य प्रह्लादस्य वचः सत्यम् कर्तुम् सः नारसिंहः आविर्बभूव आसीत् । किञ्च निजभृत्यौ भवतः जयविजयौ,`तेभ्यः विष्णुना वाग्दत्ता अस्ति, भवद्भिः जन्मत्रयम् स्वीकर्तव्यम् तत्र तेषु जन्मसु अहं मोक्षयिष्यामि इति। तस्य हिरण्यकशिपोः अपि प्राप्तवरेण ईदानीम् तस्य मारणम् अर्थात् मोक्ष प्राप्तोस्ति। एवम् च ब्रह्मापि भगवतः विष्णोः भक्तः भवति। अतः भगवतः ब्रह्मणः वाक्यम् सत्यम् कर्तुम् इदानीम् नरसिंह रूपेण आगतवानस्ति। एवम् नारदादीनाम् निजभृत्याणाम् वाक्यम् सत्यम् कर्तुम् भगवान् नारायणः नरसिंहरूपेण आगतवान् आसीत्। तत्र प्रधानतया भगवता ब्रह्मणा यो वरो दत्तः तस्य दत्तस्य वरस्य पालनम् कर्तव्यम् इति धिया "भ्राम्यन्तम् दितिजाधम्" इत्यस्मात् पद्यात् दृश्यते । अर्थात् अन्तः बहिः मरंणम् मास्तु इति उक्तवान् , अनेन कारणेन द्वारे उपविश्य, एवं उपरि अधः मास्तु इति कारणात् स्वकीय ऊरुप्रदेशे संस्थाप्य, तथा चैतन्याऽचैतन्य वस्तुना मम मारणं मास्तु इति हिरण्यकशिपुः पृष्टवानिति **"नखरान् व्युत्खाय वक्षोभुवि"** अर्थात् नखानां चैतन्यं नास्ति यतः तत्र पीडादिकं न दृश्यते । परन्तु तेषां वर्धनत्वात् नखानां चैतन्यं भवति । एवं चैतैन्याऽचैतन्ययुक्तान् नखान् एव आयुधरूपेण कृत्वा भगवान् नरसिंहः तं हिरण्यकशिपुं ममार । एवमेव हिरण्यकशिपोः वधः आचार्येण उक्तोस्ति । तदानीं तत्र विद्यमानाः सर्वाः अपि देवताः तं कोपरूपं श्रीनृसिंहं दृष्ट्वा दूरादेव स्थित्वा स्तुतिः कृतवन्तः।

**" अभ्येतुं न शशाक कोऽपि भुवने दूरेस्थिता भीरवः सर्वे शर्वविरिञ्चवासवमुखाः प्रत्येकमस्तौषत ।"**

इत्यस्मात् पद्यात् दृश्यते । अनेन पद्येन श्रीमद्भागवतपुराणे सप्तमस्कन्धे अष्टमे अध्याये यः विषयः वर्तते अर्थात् देवैः सर्वैः कृता या स्तुतिः भवति तासां सर्वासां कथनं अत्र दृश्यते वर्तते च । एवं सप्तमस्कन्धे नवमे अध्याये श्रीमद्भागवते प्रह्लादस्य स्तुतिः दृश्यते । सा च स्तुतिः कविना अत्र एकेन पद्येन वर्ण्यते । तद्यथा –

**" भूयोऽभ्यक्षतरोषधाम्नि भवति ब्रह्माज्ञया बालके**
**प्रह्लादे पदयोर्नमत्यभभये कारुण्यभाराकुलः ।**
**शान्तस्त्वं करगस्य मूर्ध्नि समधाः स्तोत्रैरथोत्गायत –**
**स्तस्याकाममधियोऽपि तेनिथ वरं लोकाय चानुग्रहम् ॥" [२५-०९]**

इति प्रह्लादकृत शान्तविषयं वर्ण्यते । एवं हिरन्याक्षवधानन्तरं प्रह्लादस्तुत्या सन्तुष्टः भगवान् तं भक्तचक्रवर्तिनम् कृत्वा अन्तर्दधे ।

**एवं नातितरौद्रचेष्टित विभो श्रीतापनीयाभिधश्रुत्यन्तस्स्फुटगीतसर्वमहिमन्नत्यन्तशुद्धाकृते ।**
**तत्ताद्दङ्निखिलोत्तरं पुनरहो कस्त्वां परो लङ्घयेत् प्रह्लादप्रिय हे मरुत्पुरपते सर्वामयात् पाहि माम् ॥**

[२५-१०]

इत्यस्मात् पदयात् वस्तुता इदम् सर्वमपि भगवद्विडम्बनमेव । यतः भगवतः नरसिंहस्य तादृश महिमा भवति । यद्यपि कोपाधिकं वर्ण्यते भगवतः नरसिंहस्य एवं भीति उत्पादिकं रूपं उच्यते च । परं सः नरसिंहः अत्यन्तं शुद्धाकृते । यथा सत्वगुणयुक्ते नृसिंहे कोपादिकं तु भवितुं न अर्हति । यतः कामक्रोधादयः रजोगुणस्य कार्यभूताः भवन्ति । अतः इदम् सर्वं विडम्बनमेव । तच्च "श्रीतापनीयाभिधश्रुत्यन्तस्फुटगीतसर्वमहिमन् " इति पदेन उच्यते ।श्रीतापनीयोपनिशद्नाम नृसिंहतापनीय उपनिषत् इति प्रसिद्धा उपनिषत् वर्तते । तत्र भगवन् नरसिम्हस्य महिमापि उच्यते । अतः तव महिमा तु अनन्यसाधारणमिति उक्त्वा हे प्रह्लादप्रिय ! सर्वामयात् सर्वविधदुःखात् मां पाहि इति दशकद्वयेन प्रह्लादचरित्रं नृसिंहचरित्रं तु अतीव सुन्दररूपेण काव्यरूपेण वर्णितमस्ति ।

**विशिष्टविषयाः**

अत्र केचनविषयाः सरसविषयाः वर्तन्ते । कविः क्वचित् स्वकीयां व्याकरणशास्त्रनिपुणतां प्रदर्शयति । एवं नूतनपदप्रयोगादिकं च करोति । तत्र स्थालीपुलाकन्यायेन प्रथमेपद्ये "हिरण्याक्षेपोत्रिप्रवरवपुषा देव भवता " दृश्यते । हिरण्याक्षस्य वधः भगवन्नारायणेन वराहरूपेण कृतः । अत्र वराहशब्दस्य पर्यायपदेन पोत्रि इति पदं प्रयुक्तं अस्ति । अयं शब्दः अतीव दुर्लभः एव काव्येषु तावत् न दृश्यते । पोत्रं नाम दंष्ट्राविशेषः अर्थात् पोत्रयुक्तः यः भवति सः पोत्री भवति । पोत्रं अस्य अस्ति इति पोत्री इति इणि प्रत्ययस्य प्रयोगः भवति । तत्रापि सामान्यवराहः नास्तीति कृत्वा पोत्रिप्रवरवपुषा इति यज्ञवराहः , श्वेतवराहः इति यः वराहमूर्तिः अस्माभिः स्तोष्यते, तादृश वराहरूपेण आगत्य हिरण्याक्षस्य वधः कृतोस्ति इति आचार्येण विशिष्टपदप्रयोगेन द्रष्टुं शक्यते । एवमेव द्वितीय दशके तृतीये पद्ये –

**" तप्तस्वर्णसवर्णघूर्णदतिरूक्षाक्षं सटाकेसरप्रोत्कम्पप्रणिकुम्पिताम्बरमहो जीयात्तवेदं वपुः ।"**

भगवतः नरसिंहस्य सटाकेसराणां प्रोत्कम्पेण नाम तस्य चालनेन अम्बरं आच्छादितं भवति । अत्र आकाशस्य आच्छादनं इत्यत्र आचार्यभट्टत्रिणा " प्रणिकुम्पिताम्बरं " इति प्रयोगः क्रियते । प्रणिकुम्पित इत्यस्य पदस्य अर्थो भवति आच्छादित इति । एतादृश विशिष्टपदप्रयोगेन आचार्यस्य वैशिष्ट्यं दृश्यते । तथा च धातूनां प्रयोगे अनितरसाधारणं भवति अयं कविः । तद्यथा चतुर्विंशति दशके पञ्चमे पद्ये अशिशिक्षत् इति निजन्तप्रयोगः कृतो भवति । एयादृशं धातूनां प्रयोगे बहुत्र अनितरसाधारणं भवति । एवमेव चतुर्विंशति दशके तृतीये पद्ये निहन्तुं त्वां इति यदा सः हिरण्यकशिपुः भगवन्तं विष्णुं चेतुं वैकुण्ठं प्रति गतवान् तदा तत्र भगवान् हरिः नास्ति । यतो हि यः बहिः भगवन्तं दृश्यते तस्य सुलभः नास्ति, अर्थात् **बहिर्दृष्टेरन्तर्दधिथ हृदये सूक्ष्मवपुषा** इति यस्य अन्तर्मुखदृष्टिः वर्तते तस्यैव भगवान् द्रष्टुं सुलभः भवति । अतः बहिः पश्याः हिरण्यकशिपोः हृदये एव गत्वा सः हरिः तस्य लीलां कृतवान् । अस्मात्

पद्यात् आचार्यः वेदान्त शास्त्रोऽपि अनितरसाधारणः इति दृश्यते । वेदे " तत्रापि दहं गगनं विशोकः तस्मिन् यदन्तस्तदुपासितव्यं" इति हृदयाकाशे मध्यवर्ति भवति भगवान् श्रीमन्नरायणः इति उच्यते । अतः भगवद्ज्ञानयुक्ताः एव अन्तर्दृष्टियुक्ताः भवति । एतादृश कारणविशेषः आचार्येण तस्मिन् तृतीये पद्ये उक्तमस्ति । एवमेव कविः श्रीमन्नारायणभट्टत्रिः कथां वर्णयन् स्वकीयं सहृदयत्वं प्रकटयति । तत्र यदा हिरण्यकशिपुना प्रह्लादमारणार्थं नानाविधोपयान् स्वीकरोति । तान् वक्तुमपि अशक्तोऽहमिति आचार्यैः उच्यते । तत्र –

**" स शूलैराविद्धः सुबहु मथितो दिग्गजगणैः महासर्पैर्दष्टोऽप्यनशणगराहारविदुतः ।**

गिरिन्द्रावक्षिप्तोप्यहह- " इति एतादृश महद्दुःखं अनुभूतवान् प्रह्लादः इति स्वकीयं दुःखं प्रदर्शयति। एवं यदा नरसिंहस्य आविर्भवनं जातं तदनन्तरं " अतः पश्चाद्विष्णो न हि विदितुमीषोऽस्मि सहसा " इति पश्चात् जातमानं वक्तुं अस्जक्तः इति कविः स्वकीयं सहृदयत्वं प्रदर्शयति । एवमेव कविः सहृदयः तादृशवर्णनमपि करोति । द्वितीये दशके प्रथमे पद्ये –

**" श्रुत्वा यं किल दैत्यराजहृदये पूर्वं कदाऽप्यश्रुतं कम्पः कश्चन सम्पपात चलितोऽप्यम्भोजभूर्विष्टपात्।"**

इति हिरण्यकशिपोः कश्चन कम्पः जातः इति वदन्नेव तस्य नरसिंहस्य आविर्भवनशब्दात् अम्भोजभूः अर्थात् साक्षाद्भगवान् ब्रह्मणः स्वकीयस्थानात् चलितः इति तस्य कवेः वर्णनाशक्तिः प्रदर्शयति। एवमेव पञ्चविंशति दशके अन्तिमे पद्ये **"श्रीतापनीयाभिधश्रुत्यन्तस्फुटगीतसर्वमहिमन्** " इति भगवान् श्रीनरसिंहस्यावतारः वेदप्रसिद्धाः उपनिषद्प्रसिद्धाः इति स्वकीयं पाण्डित्यं प्रदर्शयति ।

**उपसंहारः**

एवं श्रीनरसिंहावतारं प्रह्लादचरित्रं वर्णयन् तथा वेद, व्याकरण, अलङ्कार, वेदाङ्गेषु च इति स्वकीयं सर्वशास्त्रनिपुणत्वं प्रदर्शयति । तथा च अन्तिमे पञ्चविंशति दशके दशमे पद्ये "सर्वामयात् पाहिमां " इति काव्यस्य प्रयोजनभूतस्य शिवेतरक्षतेः निरूपणं करोति ।

" **काव्यं यशसेऽर्थकृते व्यवहारविधे शिवेतरक्षतये** " इति अमङ्गलस्य अथवा व्याधिरूपस्य अनिष्टस्य निवारणं काव्येन भवतीति काव्यप्रकाशोक्तं प्रयोजनं अनेन काव्येन च भवतीति प्रदर्शयन् समापयति । इत्थं श्रीमन्नारायणीये दशकद्वयेन नृसिंहावतारचरित्रम् वर्णितं भवति ॥

**उपयुक्तग्रन्थसूची**

श्रीमन्नारायणीयम् - Sri Mahalakshmi – Mathrubhutheswarar Trust – 2019
श्रीमद्भागवतमहापुराणम् – Gita Press, Ghorakpur – 29

# भक्तदासः

shivapriya

## १. उपोद्घातः

जगत्सृष्टिस्थितिलयकर्ता भगवान् भवति। इयं सृष्टिः भगवतः लीलार्थं भवति। तस्मात् भूलोकस्य लीलाविभूतिः इत्यपि नाम भवति! अस्मिन् लोके पशुपक्षिप्राणिनः मनुष्याः सर्वे जीवन्ति । पुण्यपापवशात् कामक्रोधवशाद्वा मनुष्यानां मध्ये परस्परं कलहो जायते । तस्मात् पापिनः साधुजनान् पीडयन्ति । तदा भगवान् -

**परित्राणाय साधूनां विनाशाय च दुष्कृताम् धर्मसंस्थापनार्थाय सम्भवामि युगे युगे॥**

इत्युक्तप्रकारेण साधु संरक्षणार्थं सर्वव्यापी परमात्मा श्रीमन्नारायणः भूमौ आविर्भवति। तस्य आविर्भावस्य कारणं न केवलं शिष्टानां परिपालनं दुष्टानां निग्रहणम् , अपितु तस्य भक्तानां प्रेमबन्धनमेव !

एतद्विषये इतिहासपुराणेषु बह्व्यः कथाः मिलिताः सन्ति! अत्र शिष्टपरिपालनादपि भक्तवचनपरिपालनं तु सम्यक् करोतीति प्रह्लादचरित्रं सूचयति ।

"**भक्तस्य दानवशिशोः परिपालनाय**" इति **श्रीवेदान्तदेशिकः** श्रीवरदराजपञ्चाशत् स्तोत्रप्रबन्धे भगवतः भक्तदासत्वं प्रकाशयति । श्रीमन्नारायणः स्वभक्तः कीदृशः कस्मिन् कुले जातः देवकुले वा असुरकुले वा मनुष्यकुले वा इति न पश्यति। अतः प्रह्लादः असुरकुले जातः चेदपि तस्य वचनपरिपालनार्थं नृसिंहावतारं धृत्वा तस्य भक्तिं निरूपयितुं स्तम्भे आविर्भूतः!

**निषादानां नेता कपिकुलपतिः कापि शबरी कुचेलः कुब्जा सा व्रजयुवतयो माल्यकृदिति।**

इति निषादः गुहः, सुग्रीवः, शबरी, कुचेलः, कुब्जा, गोपिकाः, मालाकार : इत्येते भगवद्भक्ता इति **श्रीवेदान्तदेशिकः** स्वस्य दयाशतकस्तोत्रप्रबन्धे पट्टिकां दर्शयति।

**कलौ खलु भविष्यन्ति नारायणपरायणाः। क्वचित् क्वचित् महाभागाः द्रमिडेषु च भूरिशः ॥**

**ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी । कावेरी च महाभागाः प्रतीची च महानदी ॥**

(श्रीमद् भा-11.5. 38,39)

कलियुगे भारतदेशे द्रमिडदेशेषु नारायणभक्तानां जननं भविष्यतीति श्रीभागवतपुराणे उल्लिखितमस्ति! तदनुसारेण विप्रनारायणः, भक्तिसारः, भक्ताङ्घ्रिरेणुः, शठकोपः इत्येते नारायणभक्ताः भूसूरयः आसन् । एते भगवन्तं स्तुत्वा द्राविडभाषया पद्यानि रचितवन्तः । एवमेव केरळदेशे

**नारायणभट्टत्रि** इति कश्चन भगवद्भक्तः वसति स्म। तस्य शरीरे पीडितरोगनिवारणार्थं गुरुपवनपुरे विराजमानं भगवन्तं नत्वा **गुरुपवनपते पाहि मां कृष्ण रोगात्** इति प्रार्थनाञ्च कृत्वा "नारायणीयम्" इति काव्यमेकं रचितवान्। तस्मिन् काव्ये श्रीमद्भागवतपुराणोक्तकथा एवं वर्णिताः भवन्ति। अस्मिन् काव्ये शतदशकानि सन्ति । एकैकस्मिन् दशके एकैकं चरित्रं वर्णितं भवति । एकैकचरित्रसमाप्तिसमये भगवन्तं दृष्ट्वा "एवं वा" इति भट्टत्रिः प्रश्नः अकरोत् भगवान् शिरः कम्पनं कृत्वा उत्तरं दत्तवानिति तत्र तत्र काव्ये नारायणभट्टत्रिणा सूचितमस्ति। अनेन नारायणः भक्तदासः तावत् भक्तानां दासः भगवान् इति ज्ञायते! तस्मात् भक्तदासः इति नाम्ना अत्र विषयप्रतिपादनं क्रियते।

**२. भगवत्प्रात्युपायः**

भगवत्प्राप्त्यर्थं केचन उपायाः सन्तीति श्रीमद्भागत पुराणे सप्तमस्कन्धे उपवर्णितं भवति।

**गोप्यः कामात् भयात् कंसः द्वेषात् चैत्यादयो नृपाः।**

**सम्बन्धात् वृष्णयः स्नेहात् यूयं भक्त्या वयं विभो ॥** (श्रीमद्भा. 7-1-30)

द्वेषेण कामेन स्नेहेन भयेन बन्धुत्वेन भगवन्तं प्राप्तवन्त एते। कथमिति चेत् द्वेषेण शिशुपालः, कामेन गोपिकाः, स्नेहेन पाण्डवाः, भयेन कंसः, बन्धुत्वेन यादवाः, भक्त्या नारदादयः मोक्षं प्राप्नुवन्ति । उक्तेषु उपायेषु भक्तिरेव प्रधानतमा भवति ।

**३. भक्तिः**

श्रीमद्भागवतपुराणे नवविधभक्तिः कथिता -

**श्रवणं कीर्तनं विष्णोः स्मरणं पाद सेवनम् । अर्चनं वन्दनं दास्यं सख्यं आत्मनिवेदनम् ॥**

**इति पुंसार्पिता विष्णौ भक्तिश्चेन् नवलक्षणा। क्रियते भगवत्यक्ता तन्मन्येऽधीतं उत्तमम् ॥**

अ.श्रवणम् - भगवतः विष्णोः कथाश्रवणं करणीयम् । परीक्षित् महाराजेन कृतम्।

आ.कीर्तनम् - शुकब्रह्मर्षिणा कीर्तितं श्रीमद्भागवतम् ।

इ. स्मरणम् - सर्वदा भगवत् स्मरणं प्रह्लादेन कृतम् ।

ई. पादसेवनम्- भगवतः पादसेवनं महालक्ष्म्या क्रियते।

उ. अर्चनम् - ध्रुववंशे जातेन पृथुमहाराजेन कृतम्।

ऊ. वन्दनम् - नमस्करणं अक्रूरेण कृतम्।

ऋ. दास्यम् - श्रीरामदासेन आञ्जनेयेन कृतम् ।

ॠ सख्यम् - श्रीकृष्णस्य सखा अर्जुनस्य भक्तिः ।

ऌ. आत्मनिवेदनम् - स्वं स्वीयं ऐश्वर्यं सर्वं भगवद्पाद समर्पणं महाबलिचक्रवर्तिना कृतम् ।

एतासु नवविधासु भक्तिषु एकया भक्त्या भगवन्तं प्राप्तुं शक्यते । इमं विषयं मनसि निधाय श्रीमन्नारायणीये चतुर्विंशतितमें दशके प्रह्लादचरित्रे भवद्भक्तिरेव श्रेष्ठा इति वर्णयति नारायण भट्टत्रिः ।

**अधीतेषु श्रेष्ठं किमिति परिपृष्टेथ तनये भवद्भक्तिं वर्यामभिगदति पर्याकुल धृतिः ।**

**गुरुभ्यो रोषित्वा सहजमतिरस्येत्यभिविदन् वधोपायान् अस्मिन् व्यतनुत भवत्पादशरणे ॥**

हिरण्यकशिपुः प्रह्लादं प्रति पृच्छति हे तनय आचार्यसकाशात् अधीतेषु पाठेषु श्रेष्ठं किम्? इति । भगवद्भक्तिरेव श्रेष्ठा इति उत्तरं दत्तवान्। तमेव विषयं पवनपुरीशं दृष्ट्वा नारायणभट्टत्रिः प्रह्लादः "भवद्भक्तिं वर्याम्"(श्रेष्ठं) इत्युक्तवान् । तस्मात् हिरण्यकशिपु : तस्य वधोपायान् अकरोत् इति।

**स रत्नशालासु वसन्नपि स्वयं समुन्नमद्भक्तिभरोऽमृतं ययौ ।**

**त्वमेवमापूरितभक्तवाञ्छितो मरुत्पुराधीश हरस्व मे गतान् ॥**

नारायणभट्टत्रिः कुचेलोपाख्यानविषये भगवत्करुणा कीदृशी आसीत् इति सप्ताशीति दशके दशमश्लोके एवं वक्ति । कुचेलः अतीव दरिद्रः इति कारणात् तस्य ऐश्वर्यं दत्तवान् । तस्मात् कुचेलः रत्नमयगृहे वसन् आसीत् । परन्तु स अतीव भगवत् चिन्तनपरत्वात् ऐश्वर्योपरि विश्वासरहितस्सन् भक्त्या मुक्तिं अवाप । तादृशं भगवन्तं हे गुरुवायुरीश ! मोक्षप्रदाता रोगात् मां रक्ष इति प्रार्थितवान् ।

अम्बरीषः इति कश्चन राजा । स अतीव विष्णुभक्त आसीत्। स राजा सन्नपि एकादशीव्रतानुष्ठानं अनुस्यूततया कृतवानासीत् । प्रति एकादश्यां निर्जलोपवासं कृत्वा अपरस्मिन् दिने प्रातः विष्णुं आराध्य भोजनं कुर्वन् आसीत् । एकदा एकादशी व्रतं समाप्य अपरस्मिन् दिने द्वादश्यां भगवन्तं पूजयित्वा भोजनं करणीयम् आसीत् । तदा भोजनार्थं अतिथिरूपेण दुर्वासमहर्षिः आगतवान्! अहं स्नानं कृत्वा आगच्छामि अनन्तरं भोजनं करोमि इति राजानं प्रति उक्त्वा स्नानार्थं ततः निर्गतवान् । अतिथिरूपेण महर्षि आगतः खलु इति राजा अतीव सन्तुष्टः । तस्मात् ऋषिं नत्वा भवान् स्नानं कृत्वा आगच्छतु इति प्रार्थितवान् । समयः जातः स्नानार्थं गतः ऋषिः नैव आगतः । द्वादशीकाले एव भोजनं करणीयम् । परन्तु अतीव विलम्बो जातः सोढुं असहमानः राजा भगवन्तं स्मृत्वा सकाले भोजनं कृत्वा द्वादशीव्रतं च समाप्तवान् । ततः अतिविलम्बेन दुर्वासमुनिः आगतवान् । राजा अतिथिसत्कारं अकृत्वा भुक्तवान् इति ज्ञात्वा कोपाविष्टस्सन् राजानमुपरि एकं पिशाचं प्रेषितवान्। स पिशाचः तं पीडयितुं गतः तदा विष्णुः चक्रं पिशाचं प्रति प्रेषयित्वा नाशितवान्। तं वधं कृत्वा चक्रायुधः दुर्वासं पीडयितुं आगतः । तं दृष्ट्वा भीतः ऋषिः सत्यादि लोकान् परिक्रम्य स्वात्मरक्षणार्थं तान् तान् लोकाधिपान् प्रार्थितवान्! परन्तु चक्रात् एनं ऋषिं रक्षितुं न कोऽपि समर्थः आसीत्! ततः परमपदं आगत्य त्वामेव शरणं गतः ऋषिः। तदानीं मुनिं दृष्ट्वा हे ऋषे! अहं भक्तदास इति भवान् न जानाति वा? अतः दोषः भवति वर्तते तस्मात् अम्बरीष समीपं गत्वा

क्षमापणं याचय इति त्वं उक्तवान्। दुर्वासमहर्षिः स्वप्राणरक्षणार्थं ब्रह्मादिलोकं प्रति धावनं, अन्ते अम्बरीष समीपे क्षमा याचनं च श्लोकद्वयेन भट्टत्रिणा सूचितमस्ति--

**धावन्नशेष भुवनेषु भिया स पश्यन् विश्वत्र चक्रमपि ते गतवान् विरिञ्चम्।**

**कः कालचक्रमतिलंघयतीत्यपास्तः शर्वं ययौ स च भवन्तमवन्दतैव॥**

**भूयो भवन्निलयमेत्य मुनिं नमन्तं प्राचे भवानहमृषे ननु भक्तदासः॥**

**ज्ञानं तपश्च विनयान्वितमेव मान्यं याह्यम्बरीष पदमेव भजेति भूमन्॥**

इति। एवमेव गजेन्द्रं गरुडं आरुहय रक्षितवान् खलु! रोगात् मां पाहि इति प्रार्थयति।

प्राणिनां कृते भगवत्कृपा कीदृशी वर्तते इत्यस्य उदाहरणं गजेन्द्रचरित्रं भवति। नक्रेण पीडितः गजेन्द्रः स्वशरीरबळात् नक्रं जेतुं प्रयत्नमकरोत् परन्तु न शक्तः। ततः परब्रह्मभूतं भगवन्तं चक्रधारिणं विष्णुं ध्यात्वा उच्चैरस्वरेण आह्वतवान्। वैकुण्ठलोकात् झटिति गरुडारूढेण भगवान् आगत्य चक्रायुधेन नक्रं भित्वा गजेन्द्रं मोचयामास।

**हस्तीन्द्रं तं हस्तपद्मेन धृत्वा चक्रेण त्वं नक्रवर्यं व्यदारीः।**

**गन्धर्वेऽस्मिन् मुक्तशापे स हस्ती त्वत्सारूप्यं प्राप्य देदीप्यते स्म॥**

हे गुरुपवनपुरीश गजेन्द्रस्य आर्तध्वनिं श्रुत्वा त्वरया आगत्य एकस्मिन् काले एव नक्ररूपस्थितस्य गन्धर्वस्य शापविमोचनं, भक्तस्य गजेन्द्रस्य सारूप्यमुक्तिञ्च दत्तवान् इति स्तौति नारायणभट्टत्रिः।

भक्तचरित्रेषु अन्यतमं चरित्रं ध्रुवचरित्रम्। पञ्चवयस्कः बालः अनुभवरहितोऽपि दृढवैराग्य बुद्धया अत्यन्त भक्त्या कठोर तपसा भगवत् साक्षात्कारं कृतवान्। अस्य भक्ति ढ्रुष्टवा भगवान् करुणया वात्सल्येन च तस्य कपोलप्रदेशे पाञ्चजन्येन स्पर्शनं कृत्वा अनुगृहीतवान्।

**त्वद्दर्शनप्रमदभारतरङ्गितं तं दृग्भ्यां निमग्नमिव रूपरसायने ते।**

**तुष्टूषमाणमवगम्य कपोलदेशे संस्पृष्टवानसि दरेण तथाऽदरेण॥**

हे गुरुपवनपुरीश ध्रुवः त्वां दृष्ट्वा अतीव सन्तोषेण अमृतसागरे निमग्न आसीत्। तदानीं आदरेण तस्य कपोले शङ्खस्पर्शनं कृतवानसि। इति भगवतः भक्तदासत्वं प्रकटी करोति भट्टत्रिः।

**४. उपसंहारः**

पुराणेषु भगवद्भक्तानां चरित्राणि बहूनि सन्ति। भागवतपुराणे विद्यमानानि चरित्राणि आदाय तत्रोक्तभक्तानां दासरूपेण स्थित्वा हे गुरुपवनपुरीश त्वं अनुग्रहं कृतवानसि इति साक्षात् भगवता सह सम्भाषणं कुर्वन नारायणीयं काव्यं कृतवान् भट्टत्रिः। स्तुतप्रियः भगवान् नारायणीयं स्तोत्रं श्रुत्वा तस्य रोगं निवारितवान्। भगवान् भक्तपराधीनः भक्तदासः इत्यस्मिन् विषये नकोऽपि संशयः इति शम्॥

# नारायणीयस्तोत्रे विशिष्टा व्याकरणप्रयोगाः

**रा.गुरुप्रसादः,**
शोधच्छात्रः, संस्कृतविभागः,
मद्रास् विश्वविद्यालयः, चेन्नै - ०५.

**उपोद्घातः**

संस्कृतस्य विशालतमे साहित्ये स्तोत्राणां प्रमुखं स्थानम् वरीवर्ति । वस्तुतः भारतस्य प्राचीनतमे ऋग्वेदसाहित्ये सहस्राधिकानि स्तोत्राणि सन्ति यानि प्रायः सूर्य-अग्नि-वाय्वादीनां नुतिं कुर्वन्ति सन्ति, प्रकृत्यै बलम् ओजं च ददन्ति सन्ति। एतानि स्तोत्राणि देवतानिहितगुणप्रशंसकानि, तद्गतगुणगणविवरणयुक्तानि भवन्ति।

पश्चात् मध्यकालीनसम्प्रदायानाम् अभ्युदयेन भावात्मकभक्तिसम्प्रदायस्य प्रसारेण च अस्माकं कृते अत्यन्तं भावुकभक्तिभिः सह वर्णनात्मकस्य दार्शनिकस्य च विस्तृतस्तोत्रस्य परम्परा जयदेवकृत-गीतागोविन्दकाव्यम्, लीलाशुककृतश्रीकृष्णकर्णामृतम् इत्यादिग्रन्थैः देदीप्यते।

एवं बहुषु स्तोत्रकाव्येषु प्रचार्यमाणेषु सत्सु मेलपुतुर् नारायणभट्टात्तिरिः केरलप्रसिद्धः विद्वान् कविः कलिदिने समजनि, येन भक्तिप्रवर्तनाय स्वेन विरचितस्य नारायणीयाख्यस्य स्तोत्रकाव्यस्य समास्या प्राचीनाभिलेखेषु कुरुवायूर्नाम्ना प्रसिद्धं, तदनन्तरकाले नारायणीयग्रन्थरचनेन गुरुवायूर्नाम्ना परिवर्तितमभवत्।

नारायणीयं नाम स्त्रोत्रकाव्यमिदं काव्यकलासम्पन्नस्य कवेः सर्जनात्मकशक्तेः, कल्पनाशक्तेः, दृष्टान्तरूपेण अनतिरसाधाराणं चकास्ति । काव्यमिदं सहृदयान्, भक्तान्, दार्शनिकान् च समकाले एव रञ्जयत् गुरुपवनपुरेशस्य प्रतीकरूपेण राराजते।

पुनश्च स्त्रोत्रप्रबन्धेष्वन्यतमं नारायणीयं नाम भागवतार्थसङ्ग्रहपरं भक्तिभूम्ना भागवतपुराणमप्यतिशयानम् अधुनाप्युत्तरभारतेषु तत्तानि विपश्चिद्भिरमान्यधिवासयत् चकास्ति इति हन्त जितं कैरळैः अविरलाभिनन्दननन्दनायितैः।

एतादृशमहत्त्वविशिष्टे अस्मिन् "नारायणीये विशिष्टा व्याकरणप्रयोगाः" इति शीर्षके श्रूयमाणे सत्येव ग्रन्थकर्तुः व्याकरणदक्षतायाः अन्यूनतया ग्रन्थकर्तृविरचितप्रसिद्धव्याकरणग्रन्थ-सम्पादितप्रथया च व्याकरणविशेषाः अवश्यं भवन्त्येव इति सर्वेषाम् अङ्गीकारः तत्रास्ति। तथापि आदौ शीर्षकान्तर्गततया विद्यमानस्य "विशिष्टा व्याकरणप्रयोगाः" इत्यंशस्य सुस्पष्टप्रतिपत्तिं विधाय एतत्स्तोत्रकाव्यगतविशिष्टान् व्याकरणप्रयोगान् अधिकृत्य विचार्यते।

समेऽपि जनाः सामान्यतया पाणीनीयप्रयोगानेव प्रयुञ्जाना अपि, तेषां व्याकरणसम्मतिः कथमिति न जानन्ति। केषाञ्चन प्रयोगानां विषये व्याकरणसम्मतिं जानन्ति, केषांचन विषये प्रयोगमात्रं जानन्ति, तस्य प्रयोगस्य व्याकरणसम्मतिः कथमिति तु न जानन्ति। यथा इग्वर्णस्य अचि परे यणादेशः कर्तव्यः यथा "साधु + अस्ति = साध्वस्ति" इत्याद्युदाहरणेषु इति जानन्तो जनाः "भ्रू + टा = भ्रू + आ" इत्यत्रापि इग्वर्णस्य अच्परकत्वात् यणादेशः कर्तव्यः खलु, कथं तर्हि, भ्रुवा इति रूपं लोके प्रयुज्यते इति प्रश्ने लौकिकाः अवैयाकरणाः काव्यमात्राध्ययनतत्पराश्च अवश्यमत्र किञ्चित् प्रयोगवैशिष्ट्यमस्ति येन यणादेशो नागतः इति मन्यन्ते।

एवमेव कुम्भकारः, भारहारः इत्यादिप्रयोगान् प्रयुञ्जाना जनाः तत्र "कर्मणि उपपदे सति कुम्भं करोति इत्यर्थे धातोः अण् प्रत्ययेन कुम्भकार इत्यादिरूपाणि सिद्ध्यन्ति" इति तु जानन्ति। किन्तु तुल्यया रीत्या गङ्गां धरतीत्यर्थे गङ्गाधार इति, भुवं धरतीत्यर्थे भूधार इति कुतो न भाव्यं, कथं वा लोके गङ्गाधरः, भूधर इत्येव प्रयुज्यते इति प्रश्ने अनधीतव्याकरणाः मौनं वहन्ते, अस्ति तत्र काचन व्याकरणविशिष्टता अस्ति यया रूपे वैलक्षण्यमस्तीति च मन्यन्ते।

उपर्युक्तानि उदाहरणान्याश्रित्य एवं निर्धारयितुं शक्यते यत् अत्र व्याकरणविशिष्टता नाम अनधीतव्याकरणैः सामान्यतया ज्ञातस्य विषयस्य विषये यदि किञ्चित् अपवादसूत्रमस्ति, यत् लौकिकाः अनधीतव्याकरणाश्च न जानन्ति, तादृशसूत्रसिद्धप्रयोगा "व्याकरणविशिष्टता" शब्देन विवक्षितुं शक्यते इति ममाभिप्रायः। तदनुसारेण अस्मिन् नारायणीये के प्रयोगाः सन्ति, ये च प्रयोगाः अपवादसूत्रैः सामान्यजनाज्ञातैश्च सिद्ध्यन्ति इति परिशील्य तादृशानामत्र पत्रे सङ्ग्रहः यथामति क्रियते।

**कारके व्याकरणविशेषः**

कारकप्रयोगविषये ग्रन्थस्थोदाहरणद्वयमत्र प्रदर्श्यते -

**आश्लेषाणाममृतवपुषो हन्त ते चुम्बनाना-**

**मुन्मादानां कुहकवचसां विस्मरेत् कान्त का वा ॥**

अत्र उदाहृतश्लोके "वि"इत्युपसर्गपूर्वक स्मृ चिन्तायाम् इति धातोः विधिलिङि प्रथमपुरुषैकवचने विस्मरेत् इति रूपं सिद्ध्यति। अत्र हे कान्त! का वा गोपी तव चुम्बनानि, उन्मादान्, कुहकवचांसि च विस्मरेत् इति कर्मत्वविवक्षायां द्वितीयाविभक्तिम् अप्रयुज्य, षष्ठीविभक्तिः कथं प्रयुक्ता इति शङ्का जायते। तत्र समाधानमेवं दीयते - "अधीगर्थदयेशां कर्मणि" इति कारकप्रकरणार्थगतसूत्रेण अधीगर्थः (इक्स्मरणे इति धातुः नित्यमधिपूर्वः, तस्य अर्थः इव अर्थः यस्य सः अधीगर्थः) अर्थात् स्मरणार्थकधातोः, दय्धातोः, ईश्धातोः च कर्म कारकं शेषत्वेन विवक्षितं सत् शेषार्थे षष्ठी शेषे इति सूत्रेण षष्ठी प्रयोक्तव्या इति नियमः।

अत एव हे कान्त! का वा गोपी चुम्बनानाम्, उन्मादानां, कुहकवचसां विस्मरेत् इति षष्ठी प्रयुक्ता अस्ति। कर्मत्वस्य शेषत्वेन अविवाक्षायां तावत् द्वितीयैव भवति।

**अमलामवलोक्य यां विलोलः सकलोऽपि स्पृहयाम्बभूव लोकः ॥**

अत्र उदाहृतपद्ये सकलोऽपि लोकः यां (श्रीदेवीं) स्पृहयाम्बभूव इति प्रयुक्तः विद्यते। स्पृह ईप्सायाम् इति चुरादिगणीयधातोः प्रयोगे सामान्यतया स्पृह धातोः प्रयोगे "स्पृहेरीप्सितः" इति सूत्रेण ईप्सितस्य विषयस्य संप्रदानकारकं स्यात्। तेन पुष्पेभ्यः स्पृहयति इति प्रयोगः सिद्ध्यति। परन्तु उदाहृतश्लोके यां स्पृहयाम्बभूव इति द्वितीयाविभक्तेः प्रयोगः कथमिति शङ्का उदेति। तत्र समाधानं यद्यपि ईप्सितस्य सम्प्रदानत्वात् चतुर्थी विहिता, तथापि ईप्सितमत्त्वस्य अर्थात् इष्टस्य प्रकर्षविवक्षायां तु परत्वात् कर्मत्वात् कर्मणि द्वितीया इत्यनेन द्वितीया स्यात् इति। अतः अत्र उदाहृतस्थले द्वितीयप्रयोगस्तु साधुरेव इति।

**विरलः क्रियापदप्रयोगः**

**किं वक्ष्यते स खलु मां क्वनु वीक्षितः स्यादित्थं निनाय स भवन्मयमेव मार्गम् ॥**

अत्र उदाहृतश्लोके "वक्ष्यते" इति आत्मनेपदप्रयोगः कृतो विद्यते। वच परिभाषणे इति आदादिकधातुः परस्मैपदप्रत्ययपरतया एव तस्य प्रयोगः प्रायशः दृश्यते। तर्हि वच् धातोः लृटि प्रथमपुरुषैकवचने वक्ष्यति इत्येव स्यात्, न तु वक्ष्यते इति। तर्हि वक्ष्यते इत्यत्र आत्मनेपदप्रत्ययः कथं कृतः इति शङ्का उदेति। तत्र समाधानं दीयते यत् ब्रूञ् व्यक्तायां वाचि इति आदादिकः धातुः उभयपदी अस्ति। अतः ब्रूञ् धातोः लृटि प्रथमपुरुषैकवचने ब्रुवोः वचिः आदेशः स्यात् आर्धधातुकविषये इत्यर्थकेन "ब्रुवो वचिः" इति सूत्रेण ब्रुवः वचादेशे वक्ष्यते इति रूपं सिद्ध्यति। अतः वक्ष्यते इति ब्रूधातोः लृटि प्रथमपुरुषैकवचनरूपमिति शङ्का निवार्यते।

**सोऽयं विश्वविसर्गदत्तहृदयः सम्पश्यमानः स्वयं**

**बोधं खल्वनवाप्य विश्वविषयं चिन्ताकुलस्तस्थिवान् ।**

अत्र उदाहृतपद्ये विश्वविसर्गदत्तहृदयः सोऽयं ब्रह्मा स्वयं सम्पश्यमानः विश्वविषयं बोधम् अनवाप्य चिन्ताकुलः सन् तस्थिवान् इत्यन्वये कृते सम्पश्यमानः इति ब्रह्मणः विशेषणतया प्रयुक्तः शब्दः। अत्र दृशिर् प्रेक्षणे इत्यस्य धातोः परस्मैपदित्वात् सम् इत्युपसर्गपूर्वकात् दृश् धातोः परत्र लटि कृते तस्य लटः स्थाने "लटः शतृशानचावप्रथमासमानाधिकरणे" इति निर्दिष्टसूत्रेण शतृप्रत्यये कृते सुबुत्पत्तौ "संपश्यन्" इति रूपं सिद्ध्यति। यथा भगवद्गीतायां - "लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि॥" इति। तर्हि कथमत्र श्लोके संपश्यमानः इति आत्मनेपदप्रयोगे प्रयुज्यमानस्य शानचः प्रयोगः कृतः इति शङ्का समुदेति। तत्र समाधानं दीयते यत् यद्यप्ययं दृश् धातुः परस्मैपदी भवति, तथापि अकर्मकप्रयोगेषु "सम्"

इति उपसर्गात् गम्, ऋच्छ्, प्रच्छ्, स्वर्, ऋ, श्रु, विद् इत्येतेभ्यः धातुभ्यः परे आत्मनेपदस्य प्रत्ययाः भवन्ति इत्यर्थकेन "समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः" इति सूत्रेण अकर्मकप्रयोगे समित्युपसर्गपूर्वकात् दृश् धातोः वर्तमानार्थे लटि, धातोः आत्मनेपदित्वात् तस्य लटः स्थाने शानजादेशे कर्तरि शपि आने परे मुगागमे कृते सुबुत्पत्तौ सम्पश्यमानः इति इष्टं सिद्ध्यति। अत्र प्रकृतस्थले अकर्मकविवक्षायां शानच्प्रत्ययः प्रयुक्तः इति न कोऽपि दोषः।

**कृदन्ते व्याकरणविशेषः**

**प्राप्तायाः शूर्पनख्या मदनचलधृतेरर्थनैर्निस्सहात्मा**

**तां सौमित्रौ विसृज्य प्रबलतमरुषा तेन निर्लूननासाम्।**

अत्र दत्तोदाहरणे मदनचलधृतेः प्राप्तायाः शूर्पणख्याः अर्थनैः निस्सहात्मा (भवान्) तां सौमित्रौ (लक्ष्मणे) विसृज्य प्रबलतमरुषा तेन (लक्ष्मणेन) निर्लूननासाम् इति अन्वयः क्रियते। अत्र शूर्पनखी इति प्रातिपदिकात् षष्ठीविभक्तौ एकवचने "शूर्पणख्याः" इति प्रयुक्तः विद्यते। परन्तु लोके बहुत्र "शूर्पणखा" इति शब्दः एव श्रुतपूर्वः भाति। एवं तर्हि शूर्पनखी इति ईकारान्ततया कथं प्रयुक्तः इति शङ्का उदेति। तत्र समाधानं दीयते - आदौ शूर्पणखी इत्यस्य विग्रहस्तु शूर्पाणि इव नखानि यस्याः सा इति। तर्हि शूर्पणखा वा शूर्पनखी इति प्रश्ने असंयोगोपधमुपसर्जनं यत्स्वाङ्गं तदन्ताददन्तात्प्रातिपदिकाद्वा ङीष् इत्यर्थकेन "स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" इत्यनेन विकल्पेन ङीषि प्राप्ते नखमुखान्तात् प्रातिपदिकात् संज्ञायाम् विषये स्त्रियां ङीष् प्रत्ययो न भवति इत्यर्थकेन "नखमुखात् संज्ञायाम्" इति सूत्रेण यदि शूर्पणखा इत्यस्य संज्ञावाचित्वे ङीष् निषिध्यते। तर्हि ग्रन्थकर्त्रा शूर्पनखी इति ङीष्प्रत्ययान्ततया प्रयोगः कथं कृतः इति पृष्टे, तत्र ग्रन्थकर्त्रा शूर्पनखी इति शब्दे संज्ञा न विवक्षिता, किन्तु योगमात्रं विवक्षितम्। तथा सति शूर्पनखी इत्यत्र ङीष्प्रत्ययप्राप्तौ न कश्चन क्लेशः। एवं संज्ञात्वविवक्षायां सत्यां ङीषभावे अदन्तत्वात् टापि कृते शूर्पणखा इति रूपं सिद्ध्यति। तत्र णत्वसिद्धये प्रमाणन्तु - "पूर्वपदात् संज्ञायामगः"। सूत्रार्थस्तु इत्थं पूर्वपदस्थान् निमित्तादुत्तरस्य गकारवर्जिताद् नकारस्य णकार आदेशो भवति संज्ञायां विषये इति। शूर्पणखा इत्यत्र संज्ञात्वविवक्षायां ङीषभावे टापि, णत्वे च कृते इष्टं रूपं सिद्ध्यति। एवं शूर्पनखी इति ग्रन्थकर्त्रभिमतपाठे संज्ञात्वाविविक्षायां ङीषि, णत्वाभावे इति रूपं सिद्ध्यति। परन्तु एवमेव नारायणीयस्तोत्रस्य केषुचित् पाठेषु शूर्पणखी इति णत्वङीषौ एकत्र प्रयुक्तौ स्तः। एतादृशः प्रयोगः ग्रन्थकर्तृदृष्ट्यापि असाधुः इति भाति। अत एव ग्रन्थकर्त्रा स्वीये ग्रन्थे प्रक्रियासर्वस्वे "संज्ञात्वाविवक्षायां शूर्पनखीति" स्वयं निर्दिशति इत्यतः णत्वङीषौ एकत्र प्रयोक्तुं नार्हतः इति ग्राह्यम्। तस्मात् "शूर्पनख्याः" इति पाठः समीचीनः इति।

**गुरुभ्यो रोषित्वा सहजमतिरस्येत्यभिविदन्**

**वधोपायानस्मिन् व्यतनुत भवत्पादशरणे ॥**

अत्रोदाहृतपद्येऽस्मिन् हिरण्यकशिपुः गुरुभ्यः रोषित्वा अस्य (प्रह्लादस्य) सहजमतिः इति अभिविदन् भवत्पादशरणे अस्मिन् (प्रह्लादे) वधोपायान् व्यतनुत इति अन्वयः क्रियते। अत्रोदाहृतश्लोके रोषित्वा इति क्त्वान्तं पदं प्रयुक्तं वर्तते। तस्य रूपनिष्पत्तिप्रकारस्तु रुष रोषे इति चौरादिक-सेट्धातोः समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा स्यात् इत्यर्थकेन "समानकर्तृकयोः पूर्वकाले" क्त्वाप्रत्यये कृते रुष् + क्त्वा इति जाते इडागमे कृते रुषित्वा इति रूपं सिद्ध्यति। यतः रुषित्वा इत्यस्य क्त्वान्तत्वात् कित्वात् लघूपधगुणनिषेधे सति, रोषित्वा इति रूपं कथमिति शङ्का उदेति। तत्समादधति यत् क्त्वा प्रत्ययः सेट् न किद् भवति इत्यर्थकेन "न क्त्वा सेट्" इति सूत्रेण सेटः क्त्वाप्रत्ययस्य कित्वनिषेधे सति लघूपधगुणे रोषित्वा इति इष्टं रूपं सिद्ध्यति। परन्तु रुषित्वा इत्यपि प्रयोगः दृश्यते खलु इति चेत्, सत्यम्, अत्र "न क्त्वा सेट्" इति नित्यतया विहितस्य अकित्त्वस्य विकल्पेन विधानार्थम् "उश्च इश्च वी ते उपधे यस्य तस्माद्धलादे रलन्तात्परौ क्त्वासनौ सेटौ वा कितौ स्तः" इत्यर्थकेन "रलो व्युपधाद्धलादेः संश्च" इति सूत्रेण विकल्पेन अकित्वसिद्ध्या एकस्मिन् पक्षे कित्वाभावे लघूपधगुणे रोषित्वा इति अपरस्मिन् पक्षे तावत् कित्वसद्भावे लघूपधगुणनिषेधे रुषित्वा इति इष्टं रूपद्वयं सिद्ध्यति। अतः प्रकृतस्थले उत्थापितस्य सन्देहस्य निवृत्तिः भवति।

## उपसंहारः

एवञ्च व्याकरणविशिष्टप्रयोगैः अनुबद्धे अस्मिन् नारयणीयग्रन्थे निरन्तरशास्त्रचर्चाख्यमथने सति अवश्यंभाविनः अमृतस्वरूपाः बोधनीयांशाः स्फोर्यन्ते इत्यत्र नास्ति सन्देहः। तादृशमहत्त्वविशिष्टे अस्मिन्ग्रन्थे स्थालीपुलाकन्यायेन अग्रे वक्तव्यबाहुल्ये सत्यपि यत्किञ्चित् यथामति संशोध्य "सन्तः परीक्ष्य अन्यतद्भजन्ते" इति सूक्तिदिशा विदुषां सन्निधौ विषयोऽयं प्रस्तुतः इति जनोऽयं विरम्यते। इति शम्॥

## सङ्केतसूची

1. पा.सू - पाणिनीयसूत्रम्
2. ना. - नारायणीयम्

## उपयुक्तग्रन्थसूची


1. Nārāyaṇīya - A critical study - Dr. M. V. Nalini, University of Madras, Chennai - 05, 1985.
2. रघुवंशे षष्ठसर्गे व्याकरणविशेषाः - श्री.वी.वी.वेङ्कटरमणः - Hitaya (Samskrit Referred Quarterly E Journal - ISSN 2581 7787) - Volume - 2 - July - September 2019.
3. Nārāyaṇīya - English Translation by Tapasyananda, Sri Ramakrishna Mutt, Madras - 4, 1976.
4. Nārāyaṇīya with commentary Bhaktipriyā, Deśamaṅgalavarga, Trivrandrum Sanskrit Series No.18, 1912.

ISSN: 2454 - 2547

# Bastion of *Bakti* Common to Narayaneeyam and *Śaivam*

**S. Charulatha,**
Ph.D. Research Scholar
Madras Sanskrit College

**Abstract**

This research paper addresses the core aspect of the Narayaneeyam, which is *bakti* and draws parallels with another school of faith, *Śaivam*. Though the religious alignment of Narayaneeyam is believed to be diametrically poised opposite to *Śaivam* the underlying concept of devotion or *bakti* and dedication to a deity appears similar in both the schools of faith. In practice, the deity changes but the devotion does not. Thus objectively, the depictions of *bakti* in Narayaneeyam have been culled-out and related to almost similar depictions from the religion of *Śaivam*. It is considered that the *Bakti* Movement in India was promoted by the saints hailing from the sects of *Śaivam* and *Vaiṣṇavam* and it has panned across many centuries ranging from 6th century CE to the 17th century CE. Countless saints and devotees have contributed to our popular religious faiths during this period. Despite the assigned time period for this movement, we in India have a deep-rooted conviction that *bakti* was prevalent well ahead of this period and lasts till date too. We do not dispute the fact that *bakti* did see a culmination during this span of time. Lives of many our saints including Sri Meppattur Narayana Bhattathiri, the author of Narayaneeyam are positioned during this era. We are also able map a few of the *Śaivaite* saints, exalted as the *Nāyanmārs*, to this period. It is the *bakti* of these *Nāyanmār* saints that will be studied in parallel to that of Narayana Bhattathiri in this is article. Excerpts from Narayaneeyam and the works of the *Śaivaite* saints are quoted appropriately.

Keywords: *Bakti*, Devotion

# Bastion of *Bakti* Common to Narayaneeyam and *Śaivam*

The work of Narayaneeyam by Narayana Bhattathiri is centred on *bakti*. The author's unwavering and unflinching love for the presiding deity of *Guruvāyūr*, *Guruvāyūrappan*, exudes in his verses. Being an eminent scholar and contributing extensively to modern Sanskrit literature through 40+ works, it is to be highlighted that Bhattathiri's devotional authorship has stood-out with Narayaneeyam being a masterpiece. To compare the concept of *bakti* in this work with that depicted in *Śaivam*, some common grounds are chosen in this article. From the very premise of the composition to the depth of *bakti* and to the specifics of the devotional outpourings, a few heads are discussed in the following sections.

## Premise of *Bakti*

The question about what has been the reason for the composition of Narayaneeyam has an unequivocal answer, which is, the ailment of the poet. Narayana Bhattathiri who suffered from rheumatism appealed for cure to Lord *Guruvāyūrappan*. At many places in Narayaneeyam, the author pleads for healing of his disease. To quote just a few examples in the 3rd chapter or *daśakaḥ*, in the 7th verse he says remove all my afflictions[1], in the 8th verse he mentions about the intense ailment and incurable woes[2] and the 9th verse he talks of his extreme suffering[3]. Another example is in the 83rd chapter where he mentions that he worships the Lord for the removal of his sufferings[4]. This aspect of mentioning his pain is very consistent throughout the work and can be seen repeatedly.

Distressed devotees pleading to their Lord is not unheard of. But a physically ailing staunch poet-saint reaching out to his favourite Lord in the exact same way as Narayana Bhattathiri is a unique coincidence. This coincidence can be observed in *Śaivam* in the life of the *Nāyanmār* saint *Tirunāvukkarasar* or *Appar*. *Tirunāvukkarasar* who had spent most of his life as a Jain ascetic realized when he was about 65 years of age, that *Śaivam* is his religion and Lord Śiva is his deity. It was at this time he was afflicted by a chronic stomach ailment causing him excruciating pain. He prayed to Lord Śiva through a poetic decad comprising ten verses to relieve him from the suffering. This composition is part of the most revered 12 *Tirumuṟais* which are holy devotional Tamil hymns of the *Śaivaites*.

The decad we are pondering over is the first decad hymn of the 4th *Tirumuṟai*. In fact, this is also the very first hymn sung by the saint. The hymn starts as *kūṯṟāyinavāṟu vilakkakilīr*[5] where the starting word *kūṯṟu* means Yamadeva, the *devata* of death. *Tirunāvukkarasar* claims that this disease is like death itself and hence chooses to start his hymn with the name of Yamadeva. The third line of this first verse is entirely used to describe his predicament wherein he says that the chronic ailment inside his stomach is arresting his entire intestinal system and making it dysfunctional. He repeats this statement in second and fifth verses too. Thus the saint clearly defines his problem. After his very first comparison of the illness to death, the saint goes on to say that his unbearable disease is no better than deceit, treachery, poison, dizzy torment and disorientation.

**Devotional Plea**

The poets have directly addressed their respective divinities and explained their condition as described in the preceding section. Now that the problem statement has been established and the premise has been set as illness, let us see how they plead for the remedy. Narayana Bhattathiri in the 7th verse of the 3rd chapter claims that on removal of his afflictions, his two feet will take delight in reaching Lord's temple, his hands in performing Lord's worship, his eyes in seeing Lord's enchanting form, his nose in enjoying the fragrance of the *Tulsi* leaves offered at Lord's feet and his ears in hearing the stories of Lord's glories and great deeds[6]. So his intentions and actions on relieval of his pain are delineated.

Likewise, *Tirunāvukkarasar* also claims that his cure will make him fit to be Lord's servant, make him think of the Lord day and night[7], offer the Lord holy water, flowers, incense fragrance and compose musical hymns in Tamil[8]. He assures that he does not forget the Lord regardless of what he is going through, be it good or bad[8]; not a moment goes by without thinking of the Lord[9].

**Chosen Form of the Lord**

Narayana Bhattathiri has chosen the Lord of *Guruvāyūr*, *Guruvāyūrappan*. *Tirunāvukkarasar* has chosen Lord of *Tiruvatikai*, *Vīraṭṭānēṣvarar*. *Tiruvatikai* is a village near Cuddalore of Tamil Nadu. Both the poets are devoted to their respective Lords and are also aware of the various other forms their Lord takes. But still, they have

chosen a particular form. Again regardless of the different places where their Lord's temples are situated, they have been specific in their choice of the temple too. Neither of them have made a generic prayer asking for relief to the general form of their Lord. Undoubtedly, they would have their reasons for this choice, irrespective of what we speculate as reason.

**Liberty Exclusive to *Bakti***

When there is intimacy there is also liberty. Both poets have taken the liberty with their Lord just the way we take liberty with our friends and family. Saying things like, "Have You not blessed other people, then why not me?"; or saying, "Something could go wrong if You do not bless me"; or flattering like, "This act of healing is nothing for You, who has done such great things", both poets have taken the freedom to be outspoken with their Lord.

Narayana Bhattathiri says curing his disease is just a very insignificant matter for the Lord[10] and *Tirunāvukkarasar* on similar lines says that only the Lord is capable of healing him[11]. While Narayana Bhattathiri goes to extent of warning the Lord that the words of sage Vyasa, the Lord's own words and the declarations of the Vedas would prove to be untrue if his devotion does not bear fruit[12]; *Tirunāvukkarasar* too does not fail in his warning. He goes to say that if he is not relieved, people will even stop worshipping the Lord[13].

Inference: Thus we can perceive that both the saints appear very similar to each other. Both are pained and so they express their plight through poems. Both want to be healed, so they plead for a cure. Both also address a specific form of their favourite deity in a chosen location. Ultimately, both have succeeded in their mission with their prayers answered and both attain the miraculous cure from their diseases. Both have taken liberty to even warn their Lords that failing them would not send a good message to others. Their intention has not been gaining a cure or asking for a personal favour with a selfish motive. Rather it has been that through their betterment they will surmount the obstacle they have in continuing their worship. Which other facet of a human than *bakti* can manifest itself so powerfully and exhibit its similarity between two completely

unconnected individuals? Narayana Bhattathiri and *Tirunāvukkarasar* are not contemporary, the latter was centuries earlier than the former. They did not hail from the same geography nor did they sing in the same language. Bhattathiri from Kerala has sung in Sanskrit and *Tirunāvukkarasar* from Tamil Nadu has sung in Tamil. Finally, they do not even worship the same divinity. Their *matams* are different and the doctrines of those *matams* too are apparently opposed. But despite all these differences *bakti* has manifested itself in the same way. None of the other differences seem to have mattered in the relationship between the Lord and the devotee. This is the strength of devotion and hence the title chosen for this paper calls devotion as the bastion of *bakti*.

**More Evidences to the Power of *Bakti***

We should not limit ourselves to comparing only Narayana Bhattathiri and *Tirunāvukkarasar*. There are lot more instances where other *Śaivaite* saints have written hymns similar to Narayaneeyam and performed deeds like Bhattathiri. A few illustrations are presented here to corroborate the fact *bakti* exhibits itself the same way notwithstanding faith.

Just like the story of Narayana Bhattathiri and *Tirunāvukkarasar*, we have yet another *Śaivaite* saint, who is also one among the 63 *Nāyanmārs, Suṉdaramūrti Svamikaḷ* by name. He had lost his vision and had prayed to Lord Śiva in a similar fashion for restoration of his sight. He too succeeded. We can see that *bakti* has worked miracles in all these illustrations.

**Importance of the South in *Bakti***

A very striking resemblance in geographical tagging can be seen between Narayaneeyam and *Śaivam*. A world famous slogan in *Śaivam* identifies Lord Śiva with South India saying that He belongs there and also re-iterates that just because He belongs there, others do not get left-out since He is the Lord for all nationals[14]. This slogan was given to us by *Śaivaite* saint, *Māṇikavāsakar* in his devotional compositions called *Tiruvāsakam*. Surprisingly, Narayana Bhattathiri also calls the South to be a hub of *bakti* in the 7$^{th}$ verse of the 92$^{nd}$ chapter. He says that in the *Kali Yuga* devotees are abound, mostly in the *Dravida* land, i.e., South India. In the regions of the rivers *Kāveri*, *Tāmraparṇi* and *Kritamālā*, the devotees will be more[15]. Then he attaches himself to this geography by

saying that he too is born in this region only and he is full of devotion to Lord. So he says he deserves the Lord's blessing. Thus we can see how poets take pride about South India and the *bakti* that was predominant here. Here too, the faith does not matter, the claims are the same. It is also a fact that the saints from South were instrumental in founding and sustaining the *Bakti* Movement in India.

**_Bakti_ Rescues from Clutches of Yamadeva**

It will be astonishing to learn that our poets have advised that *bakti* comes to protect in the ultimate end when death strikes and Yamadeva, the *devata* of death, comes to claim our lives. This is evidenced by verses 9 and 10 of the 22nd chapter of the Narayaneeyam. Here Narayana Bhattathiri comes up with the story of an individual who was emancipated from all his sins and freed from the messengers of Yamadeva, the moment he accidentally uttered the Lord's name[16]. The exact same fact is echoed in *Śaivam* in *Sun̲daramūrti Svamikaḷ's* hymn too, where he states that the Lord comes to take charge when confronted by the emissaries of Yama[17].

**Conclusion**

There are only a few evidences presented here to establish how the bastion of *bakti* cuts across faiths and stands common to Narayaneeyam and *Śaivam*. If we delve deeper we will be able to map every verse of the Narayaneeyam to verses of *Śaivaite* saints. Owing to the limited scope of this paper, the comparisons have been restricted to a few. But there is absolutely no second opinion on the fact that *bakti* is the focal point of compositions like Narayaneeyam. Narayana Bhattathiri himself is of the conviction that *bakti* essentially leads us to the Lord. He exhorts this fact through every verse he has composed in order to instil it in our minds. With his own *bakti* he has also demonstrated that the fruits of devotion are granted to devotees. His gain of cure is the testimony for his submission and surrender to the Lord through *bakti*. So have been the lives of countless *Śaivaite* saints too. Our salutations to all of them.

**Footnotes:**

1 – विधूय क्लेशान्मे, 3rd chapter, 7th verse.

2 – प्रभूताधिव्याधि and दुरुपशम-पीडा-परिभवान्, 3rd chapter, 8th verse.

3 – सुबहु परितप्ये, 3rd chapter, 9th verse.

4 – तापशान्त्यै निषेवे, 83rd chapter, 10th verse.

5 – கூற்றாயின வாறு விலக்ககிலீர், 4th Tirumuṟai, 1st hymn, 1st verse.

6 – विधूय क्लेशान्मे कुरु चरणयुग्मं धृतरसं भवत्क्षेत्रप्राप्तौ करमपि च ते पूजनविधौ ।

7 – ஏற்றாய் அடிக்கே இரவும் பகலும் பிரியாது வணங்குவன் எப்பொழுதும், 4th Tirumuṟai, 1st hymn, 1st verse.

8 – சலம்பூவொடு தூபம் மறந்தறியேன் தமிழோடிசை பாடல் மறந்தறியேன்
நலந்தீங்கிலும் உன்னை மறந்தறியேன் உன்னாமம் என்னாவில் மறந்தறியேன், 4th *Tirumuṟai*, 1st hymn, 6th verse.

9 – நினையாதொருபோதும் இருந்தறியேன், 4th *Tirumuṟai*, 1st hymn, 2nd verse.

10 – मदीयक्लेशौघप्रशमनदशा नाम कियती ।, 3rd chapter, 3rd verse.

11 – விலக்ககிலீர், 4th Tirumuṟai, 1st hymn, 1st verse.

12 – न चेद्व्यासस्योक्तिस्तव च वचनं नैगमवचो भवेन्मिथ्या..., 3rd chapter, 5th verse.

13 – என்போலிகள் உம்மை யினித்தெளியார் 14 – தென்னாடுடைய சிவனே போற்றி எந்நாட்டவர்க்கும் இறைவா போற்றி, 8th Tirumuṟai, 4th hymn.

15 – भक्तास्तावत्कलौ स्युर्द्रमिलभुवि ततो भूरिशस्तत्र चोच्चैः कावेरीं ताम्रपर्णीमनु किल कृतमालां च पुण्यां प्रतीचीम् ।
हा मामप्येतदन्तर्भवमपि च विभो किञ्चिदञ्चद्रसं त्वय्याशापाशैर्निबध्य भ्रमय न भगवन् पूरय त्वन्निषेवाम् ॥, 92nd chapter, 7th verse.

16 – नृणामबुद्ध्यापि मुकुन्दकीर्तनं दहत्यघौघान् महिमास्य तादृशः... इतीरितैर्याम्यभटैरपासृते..., 22nd chapter, 9th and 10th verses.

17 – தடுத்தாட்டித் தருமனார் தமர் செக்கிலிடும்போது தடுத்தாட்கொள்வான்,
7th Tirumuṟai, 90th hymn.

